।। ओं श्रीगणेश शारदा गुरुभ्यो नमः ।।

।। श्री वेदव्यासाय नमः ।।

# तैत्तिरीय यजुर्ब्राह्मणे

# ।। काठक भागः ।।




***For copies of this book please contact-***
***Parameswara Sharma***
***14/52 Manjula, Pestom Sagar***
***Chembur, Mumbai - 400 089***
***Tel: 524 2155.***

।। ओं श्रीगणेश शारदा गुरुभ्यो नमः ।।

।। श्री वेदव्यासाय नमः ।।

# तैत्तिरीय यजुर्ब्राह्मणे

# ।। काठक भागः ।।



For Private Circulation Only

*For copies of this book please contact-*
*Parameswara Sharma*
*14/52 Manjula, Pestom Sagar*
*Chembur, Mumbai - 400 089*
*Tel: 524 2155.*



## ।। श्री शृङ्गेरी श्रीजगद्गुरुमहासंस्थानम् ।।

मुद्रा

श्रीमत्परमहंसपरिव्राचकाचार्यवर्य पदवाक्यप्रमाणपारावारपारीण यमनियमासनप्राणायाम प्रत्याहार धारणाध्यानसमाध्यष्टाङ्गयोगानिष्ठाननिष्ठ तपश्चक्रवर्त्यनाद्यविच्छिन्न श्रीशङ्कराचार्यगुरुपरम्पराप्राप्त षड्दर्शनस्थापनाचार्य व्याख्यानसिंहासनाधीश्वर सकलनिगमागमसारहृदय सांख्यत्रयप्रतिपादक वैदिकमार्ग प्रवर्तक सर्वतन्त्र-स्वतंत्रादिराजधानी विद्यानगर महाराजधानी कर्णाटकसिंहासन प्रतिष्ठापनाचार्य श्रीमद्राजाधिराजगुरुभूमण्डलाचार्य ऋष्यशृङ्गपुरवराधीश्वर तुङ्गभद्रातीरवासि श्रीमद्विद्याशङ्करपादपद्माराधक श्रीजगद्गुरु श्रीमदभिनवविद्यातीर्थस्वामि गुरुकरकमलसञ्जात

### ।। श्रीजगद्गुरु शृङ्गेरी श्रीमद्भारतीतीर्थस्वामिभिः ।।

अस्मदत्यन्तप्रियशिष्य श्रीपरमेश्वरशर्म विषये नारायणस्मरणपुरस्सर विरचिता आशिषस्समुल्लसन्तु।

भवन्तः वेदमधीत्य शिष्यानध्यापयन्तः अधुना लोकानामुपकाराय अत्यावश्यक वेदभागान् स्थूलाक्षरैः सस्वरं प्रकाशयन्तीति विदित्वा भृशं मोदामहे। अत्र हि रुद्रक्रमः महान्यासः उदकशान्तिरित्यादयः प्रकाशिता ये सर्वेषामत्यन्तमावश्यकाः। भवदीयोऽयमुद्यमः धर्मश्रद्धालूनामास्तिकानां प्रशंसापात्रमिति तु निश्चप्रचम्।

श्री शारदाचन्द्रमौळीश्वरयोरसीमया कृपया इमे ग्रन्थाः आस्तिकजन पाणिपल्लवान्यलंकुर्वन्तु भवन्तश्च श्रेयःपरम्पराभिस्समेधन्तामित्याशास्महे।।

इति नारायणस्मरणम्

शृङ्गगिरिः

प्रमाथिश्रावणकृष्णाष्टमी भार्गववासरः

मुद्रा

३-९-१९९९

SRI GURUBHYO NAMAHA









MUTUAL TRUST — FRIENDSHIP -- TOLERANCE—OUR TRADITION

# Sri Sankara Jayanthi Celebration Committee

6, Savitha, 70,Pestomsagar, 2nd Road, Tilaknagar P.O., BOMBAY - 89.
Tel. Nos. : 5241864

Date

## FOREWORD

Shri Parameswara Sharma has been conducting Veda Classes in Pestom Sagar Chembur, for over two decades, and has trained over a hundred vidyarthis comprising of a wide range of asthikas covering school children, college boys, office-goers and retired elders. He has been associated with our Shri Sankara Jayanthi Celebration Committee for the past 16 years conducting Rudra-japa-abhisheka-puja along with his disciples.

Shri Parameswara Sharma's teaching skill and the recitation of vedic hymns by his disciples have been appreciated by many eminent vedic scholars and patrons of Religious & Cultural Organisations.

A momentous occasion was in June 1994, when, pleased with the excellent Ghana recitation by a few of Parameswara Sharma's young disciples,and in appreciation of his glorious spiritual service,HisHoliness Shri Bharathi Theertha Swamigal, Sringeri Mutt blessed and honoured him with a *'Ponnadai'*

**Besides conducting veda classes, Shri Parameswara Sharma devotes his available time in compiling Vedic Literature into convenient books, in bold print, very useful to vidyarthis and religious practioners. He has compiled the following books :-**

**RUDRAM -CHAMAKAM**
**RUDRA KRAMAM**
**CHAMAKA KRAMAM**
**MAHANYASAM**
**UDAKA SHANTHI**
**ACHIDRAM**
**ASWAMEDHAM (I)**

**Copies of books compiled by Parameswara Sharma were presented to HIS HOLINESS SHRI BHARATHI THEERTHA SWAMIGAL, for His approval & blessings. His Holiness has gone through the books and has expressed His happiness and said that the books are very good and would be useful to the students**

**Appreciating his effort & dedication, His Holiness has blessed Shri Parameswara Sharma with a *SHREEMUKHAM.***

**I, on behalf of the Sri Sankara Jayanthi Celebration Committee, pray to Almighty to bestow upon Shri Parameswara Sharma, a healthy, blissful and long life to continue his noble social service of propagating Vedas and Vedic Culture among the youth and active citizens.**

V. V. Chalam

**V. Venkitachalam**
**Secretary**
**Sri Sankara Jayanthi Celebration Committee**

**13th September 1999.**

# ।। काठकम् ।।

| प्रश्नः | पञ्चाशत् | पुटम् |
|---|---|---|
| प्रथमः प्रश्नः | ००१-०४९ | 1.001-037 |
| द्वितीयः प्रश्नः | ००१-०६२ | 2.001-047 |
| तृतीयः प्रश्नः | ००१-०५६ | 3.001-047 |

*******

# ।। काठकम् ।।

## विषयानुक्रमणिका।

### प्रथमः प्रश्नः।।



******

# ।। काठकम् ।।

## विषयानुक्रमणिका।

### द्वितीयः प्रश्नः।।



******

# ।। काठकम् ।।

## विषयानुक्रमणिका।

## तृतीयः प्रश्नः।।



******

ओं श्री गणेश शारदा गुरुभ्यो नमः।

श्री वेदव्यासाय नमः।

# ।। काठकम् ।।

## (प्रथमः प्रश्नः)

हरिः ओ(४)म् ।।

१ संज्ञान-व्विँज्ञानं प्रज्ञान-ञ्जानदभि-
जानत्। सङ्कल्पमानं प्रकल्पमान-
मुपकल्पमान-मुपक्लृप्तङ्क्लृप्तम्। श्रेयो
वसीय आयथ्सम्भूतं भूतम्। चित्रः केतुः
प्रभानाभान्-थ्सम्भान्। ज्योतिष्मा(ँ)स्तेजस्वा-
नातप(ँ) स्तपन्नभितपन्न्। रोचनो रोचमान-
श्शोभन-श्शोभमानः कल्याणः। दर्शादृष्टा
दर्शता विश्वरूपा सुदर्शना। आप्यायमाना-
प्यायमानाप्यायाया सूनृतेरा। आपूर्यमाणा

## काठकम्

पूर्यमाणा पूरयन्ती पूर्णा पौर्णमासी। दाता प्रदातानन्दो मोदः प्रमोदः। [१]

आवेशयन्निवेशयन्-थ्संवेशन-स्सँ शान्त-श्शान्तः। आभवन् प्रभवन्-थ्संभवन्-थ्संभूतो भूतः। प्रस्तुत-व्विँष्टुतँ सँ स्तुतङ्कल्याणं-व्विँश्वरूपम्। शुक्रममृत-न्तोजस्वि तेज-स्समिद्धम्। अरुणं भानुमन्मरीचिमदभितप-त्तपस्वत्। सविता प्रसविता दीप्तो दीपयन्-दीप्यमानः। ज्वलञ्ज्वलिता तपन्वितपन् थ्सन्तपन्न्। रोचनो रोचमान-श्शुंभू-श्शुंभमानो वामः। सुता सुन्वती प्रसुता सूयमाना-

काठकम्

ऽभिषूयमाणा। पीती प्रपासम्पातृप्ति-
स्तर्पयन्ती। [२]।

कान्ता काम्या कामजाताऽऽयुष्मती
कामदुघा। अभिशास्ता-नुमन्ता-नन्दो मोदः
प्रमोदः। आसादयन्निषादयन्-थ्स ँ सादन-
स्स ँ सन्नस्सन्नः। आभूर्विभूः प्रभू-श्शंभूर्भुवः।
पवित्रं पवयिष्यन्पूतो मेद्ध्यः। यशो यशस्वा-
नायुरमृतः। जीवो जीविष्यन्थ्स्वर्गो लोकः।
सहस्वान्-थ्सहीयानोजस्वान्-थ्सहमानः।
जयन्नभिजयन्-थ्सुद्रविणो द्रविणोदाः। आर्द्र-
पवित्रो हरिकेशो मोदः प्रमोदः। [३]।

# 1.004

## काठकम्

अरुणोऽरुणरजाः पुण्डरीको विश्वजि-
दभिजित्। आर्द्रः पिन्वमानोऽन्नवा-न्नसवा-
निरावान्। सर्वौषध स्सम्भरो महस्वान्।
एजत्काजोवत्काः। क्षुल्लका श्शिपिविष्टकाः।
सरिस्स्वरा-स्सुशेरवः। अजिरासो गमिष्णवः।
इदानीन्तदानीमेतर्हि क्षिप्रमजिरम्। आशु-
र्निमेषः फणोद्रवन्नतिद्रवन्न्। त्वरॐ स्त्वरमाण
आशुराशीयाञ्जवः। अग्निष्टोम उक्थ्योऽति-
रात्रो द्विरात्र-स्त्रिरात्र-श्चतूरात्रः। अग्निर्ऋतु-
स्सूर्य ऋतु- श्चन्द्रमा ऋतुः।
प्रजापति-स्संवँथ्सरो महान्कः।। [४]।।

*(प्रमोदस्तर्पयन्ती प्रमोदो जव स्त्रीणि च)।।*

काठकम्

२ भूरग्निञ्च पृथिवीञ्च माञ्च। त्रीँश्च लोकान्थ्सव्वँथ्सरञ्च। प्रजापतिस्त्वा सादयतु। तया देवतयाऽङ्गिरस्व द्ध्रुवासीद।

भुवो वायुञ्चान्तरिक्षञ्च माञ्च। त्रीँश्च लोकान्थ्सव्वँथ्सरञ्च। प्रजापतिस्त्वा सादयतु। तया देवतयाऽङ्गिरस्व द्ध्रुवासीद।

स्वरादित्यञ्च दिवञ्च माञ्च। त्रीँ श्च लोकान्थ्सव्वँथ्सरञ्च। प्रजापतिस्त्वा सादयतु। तया देवतयाऽङ्गिरस्व द्ध्रुवासीद।

भूर्भुवस्स्व-श्चन्द्रमसञ्च दिशश्च माञ्च। त्रीँश्च लोकान्थ्सव्वँथ्सरञ्च। प्रजापतिस्त्वा

सादयतु। तया देवतयाऽङ्गिरस्व द्ध्रुवासीद।
[५]।। (सव्वँथ्सरञ्च षट्च)।।

३ त्वमेव त्वाव्वेँत्थ योऽसि
सोऽसि। त्वमेव त्वामचैषीः। चितश्चासि
सञ्चित- श्चास्यग्ने। एतावाꣳ श्चासि भूयाꣳ
श्चास्यग्ने। यत्ते अग्ने न्यूनय्यँद्दुतेऽतिरिक्तम्।
आदित्या- स्तदङ्गिरसश्चिन्वन्तु। विश्वे ते
देवाश्चिति- मापूरयन्तु। चितश्चासि
सञ्चितश्चास्यग्ने। एतावाꣳ श्चासि भूयाꣳ
श्चास्यग्ने। मा ते अग्ने चयेन्
माऽतिचयेनायुरावृक्षि। सर्वेषा- ञ्ज्योतिषा-

## काठकम्

ञ्ज्योति र्यद्दावुदेति। तपसो जातमनिभृष्ट-
मोजः। तत्ते ज्योतिरिष्टके। तेन मे तप। तेन
मे ज्वल। तेन मे दीदिहि। यावद्देवाः।
यावदसाति सूर्यः। यावदुतापि ब्रह्म।। [६]।।

(वृक्षि नव च)।। *****

४ सव्वँथ्सरोऽसि परिवथ्सरोऽसि।
इदावथ्सरोऽसीदुवथ्सरोऽसि। इद्वथ्सरोऽसि
वथ्सरोऽसि। तस्य ते वसन्त शिशरः। ग्रीष्मो
दक्षिणः पक्षः। वरूषाः पुच्छम्। शरदुत्तरः
पक्षः। हेमन्तो मद्ध्यम्। पूर्वपक्षाश्चितयः।
अपरपक्षाः पुरीषम्। [७]।।

# काठकम्

अहोरात्राणीष्टकाः। ऋषभोऽसि स्वर्गो लोकः। यस्यान्दिशि महीयसे। ततो नो मह आवह। वायुर्भूत्वा सर्वादिश आवाहि। सर्वा दिशोऽनु विवाहि। सर्वा दिशोऽनु सव्वाँहि। चित्या चितिमापृण। अचित्या चितिमापृण। चिदसि समुद्रयोनिः। [८]।।

इन्दु र्दक्ष श्श्येन ऋतावा। हिरण्यपक्ष-श्शकुनो भुरण्युः। महान्थ्सधस्थे द्ध्रुव आनिषत्तः। नमस्ते अस्तु मा मा हिꣳसीः। एति प्रेति वीति समित्युदिति। दिवं मे यच्छ। अन्तरिक्षं मे यच्छ। पृथिवीं मे यच्छ।

## काठकम्

पृथिवीं मे यच्छ। अन्तरिक्षं मे यच्छ। दिवं मे यच्छ। अह्ना प्रसारय। रात्र्या समच। रात्र्या प्रसारय। अह्ना समच। कामं प्रसारय। कामꣳसमच।। [९]।।

*(पुरीषꣳ समुद्रयोनिः पृथिवीं मे यच्छान्तरिक्षं मे यच्छ सप्त च)।।* ********

५ भूर्भुवस्स्वः। ओजो बलम्। ब्रह्मक्षत्रम्। यशो महत्। सत्यं तपो नाम। रूपममृतम्। चक्षुश्श्रोत्रम्। मन आयुः। विश्वय्यँशो महः। समन्तपोहरोभाः। जातवेदा यदि वा पावकोऽसि। वैश्वानरो यदि वा

वैद्युतोऽसि। शं प्रजाभ्यो यजमानाय लोकम्।
ऊर्जं पुष्टिन्दददभ्यावर्वृत्स्व।। [१०]।।
(भाश्चत्वारि च)।। ******

६ राज्ञी विराज्ञी। सम्राज्ञी
स्वराज्ञी। अर्चिश्शोचिः। तपो हरो भाः।
अग्निरिन्द्रो बृहस्पतिः। विश्वेदेवा भुवनस्य
गोपाः। ते मा सर्वे यशसा सं-
सृजन्तु।।[११]।। (राज्ञीन्द्रो मा सप्त)।। ***

७ असवे स्वाहा वसवे स्वाहा।
विभुवे स्वाहा विवस्वते स्वाहा। अभिभुवे
स्वाहाऽधिपतये स्वाहा। दिवां पतये स्वाहाऽ-

# काठकम्

ंहस्पत्याय स्वाहा। चाक्षुष्मत्याय स्वाहा
ज्योतिष्मत्याय स्वाहा। राज्ञे स्वाहा विराज्ञे
स्वाहा। सम्राज्ञे स्वाहा स्वाराज्ञे स्वाहा।
शूषाय स्वाहा सूर्याय स्वाहा। चन्द्रमसे स्वाहा
ज्योतिषे स्वाहा। संं सर्पाय स्वाहा
कल्याणाय स्वाहा। अर्जुनाय स्वाहा। [१२]।
*(कल्याणाय स्वाहैकञ्च)।।* ******

८ विपश्चिते पवमानाय गायत।
महीनधाराऽत्यन्धो अर्षति। अहिर् ह
जीर्णामति सर्पति त्वचम्। अत्यो न क्रीडन्न
सरद्वृषा हरिः। उपयामगृहीतोऽसि मृत्यवे त्वा

## काठकम्

जुष्टङ्गृह्णामि। एषते योनिर्मृत्यवे त्वा।
अपमृत्युमपक्षुधम्। अपेत-श्शपथञ्जहि।
अधानो अग्न आवह। रायस्पोषꣳ सहस्त्रिणम्।
[१३]।।

येते सहस्रमयुतं पाशाः। मृत्योर्मर्त्याय
हन्तवे। तान् यज्ञस्य मायया। सर्वानव
यजामहे। भक्षोऽस्यमृत भक्षः। तस्य ते
मृत्युपीतस्यामृतवतः। स्वगाकृतस्य मधुमतः।
उपहूतस्योपहूतो भक्षयामि। मन्द्राऽभिभूतिः
केतुर्यज्ञानाव्वाँक्। असावेहि। [१४]।।

अन्धो जागृविः प्राण। असावेहि। बधिर

## काठकम्

आक्रन्दयितरपान। असावेहि। अहस्तोस्त्वा चक्षुः। असावेहि। अपादाशो मनः। असावेहि। कवेविप्रचित्तेश्रोत्र। असावेहि।। [१५]।।

सुहस्तस्सुवासाः। शूषो नामास्यमृतो मर्त्येषु। तन्त्वाऽहन्तथा वेद। असावेहि।

अग्निर्मे वाचि श्रितः। वाग्घृतये। हृदयं मयि। अहममृते। अमृतं ब्रह्मणि।

वायुर्मे प्राणे श्रितः। [१६]। प्राणो हृदये। हृदयं मयि। अहममृते। अमृतं ब्रह्मणि।

# काठकम्

सूर्यो मे चक्षुषि श्रितः। चक्षुर् हृदये।
हृदयं मयि। अहममृते। अमृतं ब्रह्मणि।

चन्द्रमा मे मनसि श्रितः। [१७]।
मनो हृदये। हृदयं मयि। अहममृते। अमृतं ब्रह्मणि।

दिशो मे श्रोत्रे श्रिताः। श्रोत्रꣳ हृदये। हृदयं मयि। अहममृते। अमृतं ब्रह्मणि।

आपो मे रेतसि श्रिताः। [१८]।
रेतो हृदये। हृदयं मयि। अहममृते। अमृतं ब्रह्मणि।

पृथिवी मे शरीरे श्रिता। शरीरꣳ हृदये।

# काठकम्

हृदयं मयि। अहममृते। अमृतं ब्रह्मणि।

ओषधि वनस्पतयो मे लोमसु श्रिताः। [१९]। लोमानि हृदये। हृदयं मयि। अहममृते। अमृतं ब्रह्मणि।

इन्द्रो मे बले श्रितः। बलꣳ हृदये। हृदयं मयि। अहममृते। अमृतं ब्रह्मणि।

पर्जन्यो मे मूर्द्धिन श्रितः। [२०]। मूर्द्धा हृदये। हृदयं मयि। अहममृते। अमृतं ब्रह्मणि।

ईशानो मे मन्यौ श्रितः। मन्युर् हृदये। हृदयं मयि। अहममृते। अमृतं ब्रह्मणि।

## काठकम्

आत्मा मं आत्मनि श्रितः। [२१]।

आत्मा हृदये। हृदयं मयि। अहममृते। अमृतं ब्रह्मणि।

पुनर्म आत्मा पुनरायुरागात्। पुनः प्राणः पुनराकूतमागात्। वैश्वानरो रश्मिभिर्वावृधानः। अन्तस्तिष्ठत्वमृतस्य गोपाः। [२२]।।    *******

*(सहस्त्रिणमिहि श्रोत्रासावेहि प्राणे श्रितो मनसि श्रितो रेतसि श्रिता लोमसु श्रिता मूर्द्धिन श्रित आत्मनि श्रितोऽष्टौ च)।।    [अग्निर्वायु स्सूर्य श्चन्द्रमा दिश आपः पृथिव्योषधि वनस्पतय इन्द्रः पर्जन्य ईशान आत्मा पुनर्मे त्रयोदश]।।*    *******

# 1.017

## काठकम्

१ प्रजापति-र्देवानसृजत। ते पाप्मना सन्दिता अजायन्त। तान्व्यद्यत्। यद्व्यद्यत्। तस्माद्विद्युत्। तमवृश्चत्। यदवृश्चत्। तस्माद्वृष्टिः। तस्माद्यत्रैते देवते अभिप्राप्नुतः। विच हैवास्य तत्र पाप्मानन्द्यतः। [२३]।।

वृश्चतश्च। सैषा मीमांसा ऽग्निहोत्र एव संपन्ना। अथो आहुः। सर्वेषु यज्ञक्रतुष्विति। होष्यन्नप उपस्पृशेत्। विद्युदसि विद्यमे पाप्मानमिति। अथ हुत्वोप-स्पृशेत्। वृष्टिरसि वृश्च मे पाप्मानमिति। यक्ष्यमाणो वेष्टा वा। वि च हैवास्यैते देवते

पाप्मानन्व्यतः। [२४]।।

वृश्चतश्च। अत्यꣳहो हारुणिः। ब्रह्मचारिणे प्रश्नान् प्रोच्य प्रजिघाय। परेहि। प्लक्षन्दैयाम्पातिं पृच्छ। वेत्थसावित्रा(३) न्न वेत्था (३) इति। तमागत्य पप्रच्छ। आचार्यो मा प्राहैषीत्। वेत्थसावित्रा (३) न्नवेत्था (३) इति। सहोवाच वेदेति। [२५]।।

स कस्मिन्प्रतिष्ठित इति। परो रजसीति। कस्तद्यत्परोरजा इति। एष वाव स परोरजा इति होवाच। य एष तपति। एषोऽर्वाग्रजा इति। स कस्मिन्त्वेष इति। सत्य इति।

किन्तथ्सत्यमिति। तप इति। [२६]।।

कस्मिन्नु तप इति। बल इति। किन्तद्-बलमिति। प्राण इति। मास्म प्राणमति पृच्छ इति माऽऽचार्योऽब्रवीदिति होवाच ब्रह्मचारी। सहोवाच प्लक्षोदैयाम्पातिः। यद्वै ब्रह्मचारिन्-प्राणमत्यप्रक्ष्यः। मूर्द्धा ते व्यपतिष्यत्। अहमुत आचार्या- च्छ्रेयान्- भविष्यामि। यो मा सावित्रे समवादिष्टेति। [२७]।।

तस्माथ्सावित्रे न सव्ँवदेत। स यो हवै सावित्र-व्ँिदुषा सावित्रे सव्ँवदते। सहास्मिन्-च्छ्रियन्दधाति। अनु हवा अस्मा असौ

काठकम्

तपच्छ्रियं मन्यते। अन्वस्मै श्रीस्तपो मन्यते। अन्वस्मै तपो बलं मन्यते। अन्वस्मैबलं प्राणं मन्यते। स यदाह। संज्ञानंव्विँज्ञान-न्दर्शा दृष्टेति। एष एव तत्। [२८]।।

अथ यदाह। प्रस्तुत- व्विँष्टुत ॐ सुता सुन्वतीति। एष एव तत्। एषह्येव तान्यहानि। एष रात्रयः।

अथ यदाह। चित्रः केतु र्दाता प्रदाता सविता प्रसविताऽभिशास्ताऽनुमन्तेति। एष एव तत्। एषह्येव तेऽह्नो मुहूर्ताः। एष रात्रेः। [२९]।।

1.021

# काठकम्

अथ यदाह। पवित्रं पवयिष्यन्-थ्सहस्वान्- थ्सहीयानरुणोऽरुणरजा इति। एष एव तत्। एष ह्येव तेऽर्द्धमासाः। एष मासाः।

अथ यदाह। अग्निष्टोम उक्थ्योऽग्निर् ऋतुः प्रजापति-स्सव्वँथ्सर इति। एष एव तत्। एष ह्येव ते यज्ञक्रतवः। एष ऋतवः। [३०]।। एष सव्वँथ्सरः।

अथ यदाह। इदानीन्तदानीमिति। एष एव तत्। एष ह्येव ते मुहूर्तानां मुहूर्ताः। जनको ह वैदेहः। अहोरात्रै-स्समाजगाम। तꣳहोचुः।

यो वा अस्मान् वेद। विजहत्पाप्मानमेति। [३१]।।

सर्वमायुरेति। अभिस्वर्गल्लोँकञ्जयति। नास्यामुष्मि-ल्लोँके- ऽन्नङ्क्षीयत इति। विजहद्ध वै पाप्मानमेति। सर्वमायुरेति। अभिस्वर्गल्लोँकञ्जयति। नास्यामुष्मिल्लोँकेऽन्नङ्क्षीयते। य एवव्वेँद। अहीनाहाश्वत्थ्यः। सावित्रव्विँदाञ्चकार। [३२]।।

सहह ँसो हिरण्मयो भूत्वा। स्वर्गल्लोँकमिमाय। आदित्यस्य सायुज्यम्। ह ँसो हवै हिरण्मयो भूत्वा। स्वर्गल्लोँकमेति।

## काठकम्

आदित्यस्य सायुज्यम्। य एवव्ँवेद। देवभागो ह श्रौतरृषः। सावित्रव्ँविदाञ्चकार। तꣳ ह वागदृश्यमानाऽभ्युवाच। [३३]।।

सर्वम्बत गौतमो वेद। यस्सावित्र-व्वेदेति। सहोवाच। कैषा वागसीति। अयमहꣳ सावित्रः। देवानामुत्तमो लोकः। गुह्यं महो बिभ्रदिति। एतावति ह गौतमः। यज्ञोपवीतङ्कृत्वाऽधो निपपात। नमो नम इति। [३४]।।

सहोवाच। मा भैषीर्गौतम। जितो वै ते लोक इति। तस्माद्ये के च सावित्रव्ँविदुः।

सर्वे ते जितलोकाः। स यो हवै सावित्रस्याष्टाक्षरं पदँ श्रियाऽभिषिक्तव्वेँद। श्रिया हैवाभिषिच्यते। घृणिरिति द्वे अक्षरे। सूर्य इति त्रीणि। आदित्य इति त्रीणि। [३५]।।

एतद्वै सावित्रस्याष्टाक्षरं पदँ श्रियाभिषिक्तम्। य एवव्वेँद। श्रिया हैवाभिषिच्यते। तदेतदृचाभ्युक्तम्। ऋचो अक्षरे परमे व्योमन्न्। यस्मिन्देवा अधि विश्वे निषेदुः। यस्तन्न वेद किमृचा करिष्यति। य इत्तद्विदुस्त इमे समासत इति। न हवा एतस्यर्चा

न यजुषा न साम्नार्थोऽस्ति। यस्सावित्रव्वेँद।
[३६]।।

तदेतत्परियद्देवचक्रम्। आर्द्रं पिन्वमानꣳ स्वर्गे लोक एति। विजहद्विश्वा भूतानि संपश्यत्। आर्द्रो हवै पिन्वमान-स्स्वर्गे लोक एति। विजहन्विश्वा भूतानि संपश्यन्न्। य एव व्वेँद। शूषो हवै वार्ष्णेयः। आदित्येन समाजगाम। तꣳ होवाच। एहि सावित्रं विद्धि। अयव्वै स्वर्ग्योऽग्निः पारयिष्णु- रमृता- थ्संभूत इति। एष वाव स सावित्रः। य एष तपति। एहि मां विद्धि।

## काठकम्

इति हैवैनन्तदुवाच।। [३७]।।

*(घ्नतो घ्नतो वेदेति तप इति समवादिष्टेति तद्रात्रेर्ऋतव एति चकारोवाच नम इत्यादित्य इति त्रीणि सावित्रव्वेंद विद्धि पञ्च च)।।*

*[संज्ञानं प्रस्तुतन्तान्यहानि रात्रयश्चित्रः केतुस्तेऽह्नो मुहूर्ता रात्रेः पवित्र- न्तेऽर्द्धमासा अग्निष्टोमो यज्ञक्रतव इदानीं मुहूर्तानाञ्जनकोऽहीना देवभागः कैषा वाक्छूषो हवै] ।।*

**************

काठकम्

१० इयव्ँवाव सरघा। तस्या अग्निरेव सारघं मधु। या एताः पूर्वपक्षापरपक्षयो रात्रयः। ता मधुकृतः। यान्यहानि। ते मधुवृषाः। स यो ह वा एता मधुकृतश्च मधुवृषाꣳश्च वेद। कुर्वन्निहास्यैता अग्नौ मधु। नास्येष्टापूर्तन्धयन्ति। अथ यो न वेद। [३८]।।

न हास्यैता अग्नौ मधु कुर्वन्ति। धयन्त्यस्येष्टापूर्तम्।

यो हवा अहोरात्राणा-न्नामधेयानि वेद। नाहोरात्रेष्वार्तिमार्च्छति।

संज्ञानं-व्विँज्ञानं-न्दर्शं दृष्टेति। एता-
वनुवाकौ पूर्वपक्षस्याहोरात्राणां-न्नामधेयानि।

प्रस्तुत-व्विँष्टुतꣳ सुतासुन्वतीति। एता-
वनुवाकावपरपक्षस्या-होरात्राणां-न्नामधेयानि।
नाहोरात्रेष्वार्तिमार्च्छति। य एवव्वँद। [३९]।

यो हवै मुहूर्तानां- न्नामधेयानि वेद।
न मुहूर्तेष्वार्तिमार्च्छति।

चित्रः केतुर्दाता प्रदाता सविता प्रसविता
ऽभिशास्ताऽनुमन्तेति। एतेऽनुवाका मुहूर्तानां-
न्नामधेयानि। न मुहूर्तेष्वार्तिमार्च्छति। य एवव्वँद।

यो हवा अर्द्धमासानाञ्च मासानाञ्च

## काठकम्

नामधेयानि वेद। नार्द्धमासेषु न मासेष्वार्ति-
मार्च्छति।

पवित्रं पवयिष्य-न्थ्सहस्वा-न्थ्सहीयानरुणो
ऽरुणरजा इति। एतेऽनुवाका अर्द्धमासानाञ्च
मासानाञ्च नामधेयानि। [४०]।।

नार्द्धमासेषु न मासेष्वार्तिमार्च्छति। य
एवव्वँद।

यो ह वै यज्ञक्रतूनाञ्चर्तूनाञ्च
सव्वँथ्सरस्यं च नामधेयानि वेद। न
यज्ञक्रतुषु नर्तुषु न सव्वँथ्सर आर्तिमार्च्छति।

अग्निष्टोम उक्थ्योऽग्निर् ऋतुः प्रजापति-

स्सव्वँथ्सर इति। एतेऽनुवाका यज्ञक्रतूना-
ञ्चर्तूनाञ्च सव्वँथ्सरस्य च नामधेयानि।
न यज्ञक्रतुषु नर्तुषु न सव्वँथ्सर
आर्तिमार्च्छति। य एवव्वेँद।

यो हवै मुहूर्तानां मुहूर्तान् वेद। नमुहूर्तानां
मुहूर्तेष्वार्तिमार्च्छति। [४१]।।

इदानीन्तदानीमिति। एते वै मुहूर्तानां
मुहूर्ताः। न मुहूर्तानां मुहूर्तेष्वार्तिमार्च्छति।
य एवव्वेँद।

अथो यथा क्षेत्रज्ञो भूत्वाऽनु
प्रविश्यान्नमत्ति। एवमेवैतान् क्षेत्रज्ञो भूत्वाऽनु

# काठकम्

प्रविश्यान्नमत्ति। स एतेषामेव संलोकता ँ सायुज्यमश्नुते। अपपुनर्मृत्युञ्जयति। य एवव्ँवेद।। [४२]।। ******

*(न वेदैवव्ँवेदानुवाका अर्द्धमासानाञ्च मासानाञ्च नामधेयानि मुहूर्तेष्वार्तिमार्च्छति नव च)।।*

*[सरघाऽह्नोरात्राणा ँ संज्ञानं पूर्वपक्षस्य प्रस्तुतमपरपक्षस्य मुहूर्तानाञ्चित्रः केतुरर्द्धमासानां पवित्र-य्यँज्ञक्रतूनामग्निष्टोमो मुहूर्तानां मुहूर्तान् वेदेदानीमथो यथा]।।* ******

११ कश्चिद्धवा अस्माल्लोकात्प्रेत्य। आत्मानव्ँवेद। अयमहमस्मीति। कश्चित्स्वल्ँलोकन्न प्रतिप्रजानाति। अग्निमुग्धो हैव धूमतान्तः। स्वल्ँलोकन्न प्रतिप्रजानाति। अथ यो हैवैतमग्नि ँ सावित्रव्ँवेद। स एवास्माल्लोकात्प्रेत्य। आत्मानव्ँवेद। अयमहमस्मीति [४३]।।

सस्वल्ँलोकं प्रतिप्रजानाति। एष उवेवैनन्तत्सावित्रः। स्वर्गल्ँलोकमभि वहति। अहोरात्रैर्वा इद ँ सयुग्भिःक्रियते। इतिरात्रायां दीक्षिषत। इतिरात्राय व्रतमुपागुरिति।

तन्निहानेवव्विँदुषः। अमुष्मिल्लँ्लोके शेवधि-न्धयन्ति। धीतꣳ हैव सशेवधिमनु परैति। अथ यो हैवैतमग्निꣳ साविन्त्रव्वेँद। [४४]।।

तस्य हैवाहोरात्राणि। अमुष्मिल्लँ्लोके शेवधिन्न धयन्ति। अधीतꣳ हैव स शेवधिमनु परैति।

भरद्वाजो ह त्रिभिरायुर्भि ब्रह्मचर्यमुवास। तꣳ ह जीर्णिꣳ स्थविरꣳ शयानम्। इन्द्र उपव्रज्योवाच। भरद्वाज। यत्ते चतुर्थमायु-र्दद्याम्। किमेनेन कुर्या इति। ब्रह्मचर्यमेवैनेन चरेयमिति होवाच। [४५]।।

## काठकम्

तꣳ ह त्रीन्गिरिरूपानविज्ञातानिव दर्शयाञ्चकार। तेषाꣳ हैकैकस्मान्मुष्टिनाऽऽददे। सहोवाच। भरद्वाजेत्यामन्त्र्य। वेदा वा एते। अनन्ता वै वेदाः। एतद्वा एतैस्त्रिभिरायुर्भिरन्ववोचथाः। अथ त इतरदननूक्तमेव। एहीमं विद्धि। अयव्ँवै सर्वविद्येति। [४६]।।

तस्मै हैतमग्निꣳ सावित्रमुवाच। तꣳ स विदित्वा। अमृतो भूत्वा। स्वर्गल्ँलोकमियाय। आदित्यस्य सायुज्यम्। अमृतो हैव भूत्वा। स्वर्गल्ँलोकमेति। आदित्यस्य सायुज्यम्। य एव्ँवेद।

## काठकम्

एषो एव त्रयी विद्या। [४७]।।

यावन्त᳚ ह वै त्रय्याविद्यया लोक-
ञ्जयति। तावन्तल्ँलोकञ्जयति। य एवव्ँवेद।

अग्नेर्वा एतानि नामधेयानि। अग्नेरेव
सायुज्य᳚सलोकतामाप्नोति। य एवव्ँवेद।

वायोर्वा एतानि नामधेयानि। वायोरेव
सायुज्य᳚सलोकतामाप्नोति। य एवव्ँवेद।

इन्द्रस्य वा एतानि नामधेयानि। [४८]।।
इन्द्रस्यैव सायुज्य᳚ सलोकतामाप्नोति। य
एवव्ँवेद।

बृहस्पतेर्वा एतानि नामधेयानि।

बृहस्पतेरेव सायुज्य॑ँ सलोकतामाप्नोति। य एवव्वँद।

प्रजापतेर्वा एतानि नामधेयानि। प्रजापतेरेव सायुज्य॑ँ स लोकतामाप्नोति। य एवव्वँद।

ब्रह्मणो वा एतानि नामधेयानि। ब्रह्मण एव सायुज्य॑ँ सलोकतामाप्नोति। य एवव्वँद।

स वा एषोऽग्निरपक्षपुच्छो वायुरेव। तस्याग्निर्मुखम्। असावादित्यश्शिरः। स यदेते देवते अन्तरेण। तथ्सर्व॑ँ सीव्यति। तस्माथ्सावित्रः। [४९]।।

# काठकम्

(अयमहमस्मीति वेद होवाच सर्वविद्योति विद्येन्द्रस्य वा एतानि नामधेयानि ब्रह्मण एव सायुज्यꣳ सलोकतामाप्नोति सप्त च)।।

[संज्ञानं भूस्त्वमेव सँव्वथ्सरोऽसि भूराज्यसंवे विपश्चिते प्रजापतिर्देवानियँव्वाव सरघा कश्चिद्धैकादश]।।[११]।।

[संज्ञानꣳ राज्ञी मूर्द्धा हृदय एष सँव्वंथ्सरो नार्द्धमासेषु नवचत्वारिꣳशात् ]।। [४९]।।

संज्ञानꣳसावित्रः।

*************

हरिः ओ(३)म्

इति तैत्तिरीय यजुर्ब्राह्मणे काठके

प्रथमः प्रश्नस्समाप्तः।।

ओं श्रीगणेश शारदा गुरुभ्यो नमः

श्री वेदव्यासाय नमः

# ।। काठकम् ।।

(द्वितीयः प्रश्नः)

हरिः ओ(४)म्

१ लोकोऽसि स्वर्गोऽसि। अनन्तोऽस्यपारोऽसि। अक्षितोऽस्यक्षय्योऽसि। तपसः प्रतिष्ठा। त्वयीदमन्तः। विश्वय्यँक्षव्विँश्वं भूतव्विँश्वꣳ सुभूतम्। विश्वस्य भर्ता विश्वस्य जनयिता। तन्त्वोपदधे कामदुघमक्षितम्। प्रजापतिस्त्वा सादयतु। तया देवतयाऽङ्गिरस्व दध्रुवासीद।[१]।।

तपोऽसि लोके श्रितम्। तेजसः प्रतिष्ठा। त्वयीदमन्तः। विश्वय्यँक्षव्विँश्वं भूतव्विँश्वꣳ

सुभूतम्। विश्वस्य भर्तृ विश्वस्य जनयितृ। तत्त्वोपदधे कामदुघमक्षितम्। प्रजापतिस्त्वा सादयतु। तया देवतयाऽङ्गिरस्व द्ध्रुवासीद। [२]।।

तेजोऽसि तपसि श्रितम्। समुद्रस्य प्रतिष्ठा। त्वयीदमन्तः। विश्वँय्यँक्षव्विँश्वं भूतव्विँश्वꣳ सुभूतम्। विश्वस्य भर्तृ विश्वस्य जनयितृ। तत्त्वोपदधे कामदुघमक्षितम्। प्रजापतिस्त्वा सादयतु। तया देवतया-ऽङ्गिरस्व द्ध्रुवासीद। [३]।।

समुद्रोऽसि तेजसि श्रितः। अपां प्रतिष्ठा।

## ।। काठकम् ।।

त्वयीदमन्तः। विश्वय्यँक्षव्विँश्वं भूतव्विँश्वꣳ सुभूतम्। विश्वस्य भर्ता विश्वस्य जनयिता। तन्त्वोपदधे कामदुघमक्षितम्। प्रजापतिस्त्वा सादयतु। तया देवतया- ऽङ्गिरस्व दध्रुवासीद। [४]।।

आपस्थस्समुद्रे श्रिताः। पृथिव्याः प्रतिष्ठा युष्मासु। इदमन्तः। विश्वय्यँक्षव्विँश्वं भूत-व्विँश्वꣳ सुभूतम्। विश्वस्य भर्त्यो विश्वस्य जनयित्र्यः। ताव उपदधे कामदुघा आक्षिताः। प्रजापतिस्त्वा सादयतु। तया देवतया ऽङ्गिरस्वदध्रुवासीद। [५] ।।

।। काठकम् ।।

पृथिव्यस्यप्सु श्रिता। अग्नेः प्रतिष्ठा। त्वयीदमन्तः। विश्वय्यँक्षव्विँश्वं भूतव्विँश्वꣳ सुभूतम्। विश्वस्य भर्त्री विश्वस्य जनयित्री। तान्त्वोपदधे कामदुघामक्षिताम्। प्रजापतिस्त्वा सादयतु। तया देवतया- ऽङ्गिरस्वद्ध्रुवासीद। [६]।।

अग्निरसि पृथिव्याꣳ श्रितः। अन्तरिक्षस्य प्रतिष्ठा। त्वयीदमन्तः। विश्वय्यँक्षव्विँश्वं भूतव्विँश्वꣳ सुभूतम्। विश्वस्य भर्ता विश्वस्य जनयिता। तन्त्वोपदधे कामदुघमक्षितम्। प्रजापतिस्त्वा सादयतु। तया देवतया

ऽङ्गिरस्वद्ध्रुवासीद। [७]।।

अन्तरिक्षमस्यग्नौ श्रितम्। वायोः प्रतिष्ठा। त्वयीदमन्तः। विश्वँय्यँक्षव्विँश्वं भूतव्विँश्वँ सुभूतम्। विश्वस्य भर्तृ विश्वस्य जनयित्रृ। तत्वोपदधे कामदुघमक्षितम्। प्रजापतिस्त्वा सादयतु। तया देवतया-ऽङ्गिरस्व द्ध्रुवासीद। [८]।।

वायुरस्यन्तरिक्षे श्रितः। दिवः प्रतिष्ठा। त्वयीदमन्तः। विश्वँय्यँक्षव्विँश्वं भूत व्विँश्वँ सुभूतम्। विश्वस्य भर्ता विश्वस्य जनयिता। तन्त्वोपदधे कामदुघमक्षितम्। प्रजापतिस्त्वा

॥ काठकम् ॥

सादयतु। तया देवतयाऽङ्गिरस्वद्ध्रुवासीद।
[९]॥

द्यौरसि वायौ श्रिता। आदित्यस्य
प्रतिष्ठा। त्वयीदमन्तः। विश्वय्यँक्षव्विँश्वं
भूतव्विँश्वꣳ सुभूतम्। विश्वस्य भर्त्री विश्वस्य
जनयित्री। तान्त्वोपदधे कामदुघामक्षिताम्।
प्रजापतिस्त्वा सादयतु। तया देवतया-
ऽङ्गिरस्व द्ध्रुवासीद। [१०]॥

आदित्योऽसि दिवि श्रितः। चन्द्रमसः
प्रतिष्ठा। त्वयीदमन्तः। विश्वय्यँक्षव्विँश्वं भूत-
व्विँश्वꣳ सुभूतम्। विश्वस्य भर्ता विश्वस्य

।। काठकम् ।।

जनयिता। तन्त्वोपदधे कामदुघमक्षितम्। प्रजापतिस्त्वा सादयतु। तया देवतया-ऽङ्गिरस्वद्ध्रुवासीद। [११]।।

चन्द्रमा अस्यादित्ये श्रितः। नक्षत्राणां प्रतिष्ठा। त्वयीदमन्तः। विश्वय्यँक्षव्विँश्वं भूतव्विँश्वꣳ सुभूतम्। विश्वस्य भर्ता विश्वस्य जनयिता। तन्त्वोपदधे कामदुघमक्षितम्। प्रजापतिस्त्वा सादयतु। तया देवतया-ऽङ्गिरस्व दृध्रुवासीद। [१२]।।

नक्षत्राणिस्थ चन्द्रमसि श्रितानि। सव्वँथ्सरस्यं प्रतिष्ठा युष्मासु। इदमन्तः।

॥ काठकम् ॥

विश्वय्यँक्षव्विँश्वं भूतव्विँश्वꣳ सुभूतम्। विश्वस्य भर्त्तृणि विश्वस्य जनयितॄणि। तानि व उपदधे कामदुघान्यक्षितानि। प्रजापतिस्त्वा सादयतु। तया देवतया- ऽङ्गिरस्व दध्रुवासीद। [१३]॥

सव्वँथ्सरोऽसि नक्षत्रेषु श्रितः। ऋतूनां प्रतिष्ठा। त्वयीदमन्तः। विश्वय्यँक्षव्विँश्वं भूतव्विँश्वꣳ सुभूतम्। विश्वस्य भर्ता विश्वस्य जनयिता। तन्त्वोपदधे कामदुघमक्षितम्। प्रजापतिस्त्वा सादयतु। तया देवतया- ऽङ्गिरस्वदध्रुवासीद। [१४]॥

## ।। काठकम् ।।

ऋतवस्स्थ सव्वँथ्सरे श्रिताः। मासानां प्रतिष्ठा युष्मासु। इदमन्तः। विश्वय्यँक्षव्विँश्वं भूतव्विँश्वꣳ सुभूतम्। विश्वस्य भर्तारो विश्वस्य जनयितारः। तान् व उपदधे कामदुघानक्षितान्। प्रजापतिस्त्वा सादयतु। तया देवतयाऽङ्गिरस्वद्ध्रुवासीद। [१५]।।

मासास्स्थर्तुषु श्रिताः। अर्द्धमासानां प्रतिष्ठा युष्मासु। इदमन्तः। विश्वय्यँक्षव्विँश्वं भूतव्विँश्वꣳ सुभूतम्। विश्वस्य भर्तारो विश्वस्य जनयितारः। तान् व उपदधे कामदुघानक्षितान्। प्रजापतिस्त्वा सादयतु।

।। काठकम् ।।

तयां देवतंयाऽङ्गिरस्वद्ध्रुवासींद। [१६]।।

अर्द्धमासास्स्थं मासु श्रिताः।
अहोरात्रयोः प्रतिष्ठा युष्मासु। इदमन्तः।
विश्वंय्यँक्षव्विँश्वं भूतव्विँश्वꣳ सुभूतम्।
विश्वंस्य भर्तारो विश्वंस्य जनयितारः। तान्
व उपंदधे कामदुघानक्षितान्। प्रजापंतिस्त्वा
सादयतु। तयां देवतंयाऽङ्गिरस्वद्ध्रुवासींद।
[१७]।।

अहोरात्रेस्थोऽर्द्धमासेषु श्रिते।
भूतस्यं प्रतिष्ठे भव्यंस्य प्रतिष्ठे। युवयोरिद-
मन्तः। विश्वंय्यँक्षव्विँश्वं भूतव्विँश्वꣳ सुभूतम्।

विश्वस्य भर्त्यौ विश्वस्य जनयित्र्यौ। ते वामुपदधे कामदुघे अक्षिते। प्रजापतिस्त्वा सादयतु। तया देवतयाऽङ्गिरस्वद्ध्रुवासीद। [१८]।।

पौर्णमास्यष्टकाऽमावास्या। अन्नादास्स्थान्नदुघो युष्मासु। इदमन्तः। विश्वय्यँक्षव्विँश्वं भूतव्विँश्वꣳ सुभूतम्। विश्वस्य भर्त्र्यो विश्वस्य जनयित्र्यः। ताव उपदधे कामदुघा अक्षिताः। प्रजापतिस्त्वा सादयतु। तया देवतयाऽङ्गिरस्वद्ध्रुवासीद। [१९]।।

## ।। काठकम् ।।

राडसि बृहती श्रीरसीन्द्रपत्नी धर्मपत्नी। विश्वं भूतमनु प्रभूता। त्वयीदमन्तः। विश्वँय्यँक्षव्विँश्वं भूतव्विँश्वꣳ सुभूतम्। विश्वस्य भर्त्री विश्वस्य जनयित्री। तान्त्वोपदधे कामदुघामक्षिताम्। प्रजापतिस्त्वा सादयतु। तया देवतयाऽङ्गिरस्वद्ध्रुवासीद। [२०]।।

ओजोऽसि सहोऽसि। बलमसि भ्राजोऽसि। देवानान्धामामृतम्। अमर्त्यस्तपोजाः। त्वयीदमन्तः। विश्वँय्यँक्षव्विँश्वं भूतव्विँश्वꣳ सुभूतम्। विश्वस्य भर्ता विश्वस्य जनयिता। तन्त्वोपदधे कामदुघमक्षितम्।

।। काठकम् ।।

प्रजापतिस्त्वा सादयतु। तयादेवतया-ऽङ्गिरस्वद्ध्रुवासीद। [२१]।। ******

(लोकस्तपस्तेजस्समुद्र आपः पृथिव्यग्निरन्तरिक्षँव्वायुर्द्यौरादित्यश्चन्द्रमा नक्षत्राणि सव्वँथ्सर ऋतवो मासा अर्द्धमासा अहोरात्रे पौर्णमासी राडस्योजोऽस्येकविँशतिः)।।

[ लोकोऽसि भर्ता तम्।तपस्तेजोऽसि भर्तृ तत्। समुद्रोऽसि भर्ता तम्। आप- स्स्थ भर्त्र्यस्तावः। पृथिवी भर्त्री ताम्। अग्निरसि भर्ता तम्। अन्तरिक्षं भर्तृ तत्। वायुरसि भर्ता तम्। द्यौरसि भर्त्री ताम्। आदित्यश्चन्द्रमा भर्ता तम्। नक्षत्राणिस्थ भर्तॄणि तानि वः। सव्वँथ्सरोऽसि भर्ता तम्। ऋतवो मासा अर्द्धमासा

।। काठकम् ।।

भर्तारो भर्तारो भर्तारस्तान् वः। अहोरात्रे भर्त्र्यौ ते वाम्। पौर्णमासी भर्त्र्यस्ता वः। राडसि भर्त्री ताम्। ओजोऽसि भर्ता तमेकविंशतिः]।।

**********

२ त्वमग्ने रुद्रो असुरो महो दिवः। त्वं शर्द्धो मारुतं पृक्ष ईशिषे। त्वव्वातैररुणैर्यासि शङ्गयः। त्वं पूषा विधतः पासि नुत्मना। देवा देवेषु श्रयद्ध्वम्। प्रथमा द्वितीयेषु श्रयद्ध्वम्। द्वितीयास्तृतीयेषु श्रयद्ध्वम्। तृतीयाश्चतुर्थेषु श्रयद्ध्वम्। चतुर्थाः पञ्चमेषु श्रयद्ध्वम्। पञ्चमाष्षष्ठेषु

श्रयद्ध्वम्। [22]।।

षष्ठास्सप्तमेषु श्रयद्ध्वम्। सप्तमा अष्टमेषु श्रयद्ध्वम्। अष्टमा नवमेषु श्रयद्ध्वम्। नवमा दशमेषु श्रयद्ध्वम्। दशमा एकादशेषु श्रयद्ध्वम्। एकादशा द्वादशेषु श्रयद्ध्वम्। द्वादशास्त्रयोदशेषु श्रयद्ध्वम्। त्रयोदशाश्चतुर्दशेषु श्रयद्ध्वम्। चतुर्दशाः पञ्चदशेषु श्रयद्ध्वम्। पञ्चदशाष्षोडशेषु श्रयद्ध्वम्। [२३]।।

षोडशास्सप्तदशेषु श्रयद्ध्वम्। सप्तदशा अष्टादशेषु श्रयद्ध्वम्। अष्टादशा एकान्न-

॥ काठकम् ॥

विं शेषु श्रयद्ध्वम्। एकान्नविं शा
विं शेषु श्रयद्ध्वम्। विं शा एकविंशेषु
श्रयद्ध्वम्। एकविं शा द्वाविं शेषु
श्रयद्ध्वम्। द्वाविं शा- स्त्रयोविं शेषु
श्रयद्ध्वम्। त्रयोविं शा- श्चतुर्विंशेषु
श्रयद्ध्वम्। चतुर्विं शाः पञ्चविं शेषु
श्रयद्ध्वम्। पञ्चविं शा- ष्षड्विं शेषु
श्रयद्ध्वम्। [२४]॥

षड्विं शास्सप्तविं शेषु श्रयद्ध्वम्।
सप्तविं शा अष्टाविं शेषु श्रयद्ध्वम्।
अष्टाविं शा एकान्नत्रिं शेषु श्रयद्ध्वम्।

।। काठकम् ।।

एकान्नत्रिꣳ शा- स्त्रिꣳ शेषु श्रयद्ध्वम्।
त्रिꣳ शा एकत्रिꣳ शेषु श्रयद्ध्वम्।
एकत्रिꣳ शा द्वात्रिꣳ शेषु श्रयद्ध्वम्।
द्वात्रिꣳ शा- स्त्रयस्त्रिꣳ शेषु श्रयद्ध्वम्।
देवा- स्त्रिरेकादशा- स्त्रिस्त्रयस्त्रिꣳ शाः।
उत्तरे भवत। उत्तरवत्मान उत्तरसत्वानः।
यत्काम इदञ्जुहोमि। तन्मे समृद्ध्यताम्।
वयꣳ स्याम पतयो रयीणाम्। भूर्भुवस्स्व
स्स्वाहा। [२५]।।

(षष्ठेषु श्रयद्ध्वꣳ षोडशेषु श्रयद्ध्वꣳ षड्विꣳ शेषु
श्रयद्ध्वमुत्तरे भवतोत्तरवत्मान उत्तरसत्वानश्चत्वारि
च)।।

*******

।। काठकम् ।।

३ अग्नाविष्णू सजोषसा। इमा वर्द्धन्तु वाङ्गिरः। द्युम्नैर्वाजेभिरागतम्। राज्ञी विराज्ञी। सम्राज्ञी स्वराज्ञी। अर्चिश्शोचिः। तपो हरोभाः। अग्निस्सोमो बृहस्पतिः। विश्वेदेवा भुवनस्य गोपाः। ते सर्वे सङ्गत्य। इदं मे प्रावता वचः। वयꣳस्याम पतयो रयीणाम्। भूर्भुवस्स्वस्स्वाहा। [२६]।।

*(सङ्गत्य त्रीणि च)।।* *******

४ अन्नपतेऽन्नस्य नो देहि। अनमीवस्य शुष्मिणः। प्रप्रदातारन्तारिषः। ऊर्जन्नो धेहि द्विपदे चतुष्पदे। अग्ने पृथिवीपते।

।। काठकम् ।।

सोमवीरुधां पते। त्वष्टस्समिधां पते। विष्णवाशानां पते। मित्रसत्यानां पते। वरुण धर्मणां पते। [२७]।।

मरुतो गणानां पतयः। रुद्रपशूनां पते। इन्द्रौजसां पते। बृहस्पते ब्रह्मणस्पते। आरुचारोचेऽहꣳ स्वयम्। रुचारुरुचेरोचमानः। अतीत्यादस्वराभरेह। तस्मिन् योनौ प्रजनौ प्रजायेय। वयꣳस्याम पतयो रयीणाम्। भूर्भुवस्स्वस्स्वाहा। [२८]।। ********

(वरुणधर्मणां पते स्वस्स्वाहा)।।

********

।। काठकम् ।।

५ सप्तते अग्ने समिध-स्सप्तजिह्वाः। सप्तर्षय-स्सप्तधाम प्रियाणि। सप्तहोत्रा-अनुविद्वान्। सप्तयोनीरापृणस्वा घृतेन।

प्राचीदिक्। अग्निर्देवता। अग्निँ सदिशान्देवन्देवतानामृच्छतु। योमैतस्यै दिशोऽभिदासति।

दक्षिणादिक्। इन्द्रो देवता। [२९]।। इन्द्रँ सदिशान्देवन्देवतानामृच्छतु। योमैतस्यै दिशोऽभिदासति।

प्रतीचीदिक्। सोमो देवता। सोमँ सदिशान्देवन्देवतानामृच्छतु। योमैतस्यै दिशो-

ऽभिदासति।

उदीचीदिक्। मित्रावरुणौ देवता। मित्रावरुणौ सदिशान्देवौ देवतानामृच्छतु। योमैतस्यै दिशोऽभिदासति। [३०]।।

ऊर्द्ध्वादिक्। बृहस्पतिर्देवता। बृहस्पतिँ सदिशान्देव- न्देवतानामृच्छतु। योमैतस्यै दिशोऽभिदासति।

इयन्दिक्। अदितिर्देवता। अदितिँ सदिशान्देवी न्देवतानामृच्छतु। योमैतस्यै दिशोऽभिदासति।

पुरुषोदिक्। पुरुषोमे कामान्त्समर्द्धयतु।

[३१]।।

## ।। काठकम् ।।

अन्धो जागृविः प्राण। असावेहि। बधिर आँक्रन्दयितरपान। असावेहि। उषसमुषसमशीय। अहमसो ज्योतिरशीय। अहमसोऽपोशीय। वयꣳ स्याम पतयो रयीणाम्। भूर्भुवस्स्वस्स्वाहा।। [३२]।।

*(दक्षिणादिगिन्द्रो देवता मित्रावरुणौ सदिशान्देवौ देवतानामृच्छतु योमैतस्यै दिशो- ऽभिदासत्यर्द्धयतु नव च)।।*

*********

६ यत्तेऽचित्-य्यँदुचितन्ते अग्ने। यत्त ऊनय्यँदुतेऽतिरिक्तम्। आदित्यास्तदङ्गिरस-श्चिन्वतु। विश्वे ते देवाश्चितिमापूरयन्तु। चितश्चासि सञ्चितस्चास्यग्ने। एतावाँ श्चासि भूयाँ श्चास्यग्ने। लोकं पृणच्छिद्रं पृण। अथो सीदशिवात्वम्। इन्द्राग्नी त्वा बृहस्पतिः। अस्मिन् योनावसीषदन्न्। [२३]।

तया देवतयाऽङ्गिरस्वद्ध्रुवासीद। ता अस्य सूददोहसः। सोमँ श्रीणन्ति पृश्नयः। जन्मन्देवानाव्विँशः। त्रिष्वारोचने दिवः। तया देवतयाङ्गिरस्वद्ध्रुवासीद। अग्ने देवाँ

इहावह। जज्ञानोवृक्त बर्हिषे। असि होता न ईड्यः। अगन्म महामनसा यविष्ठम्। [३४]

यो दीदाय समिद्ध-स्स्वेदुरोणे। चित्रभानू रोदसी अन्तरुर्वी। स्वाहुत-व्विँश्वतः प्रत्यञ्चम्। मेधाकार-व्विँदथस्य प्रसाधनम्। अग्निँ होतारं परिभूतमं मतिम्। त्वामर्भस्य हविषस्समानमित्। त्वां महोवृणते नरो नान्यन्त्वत्। मनुष्वत्वा निधीमहि। मनुष्व-थ्समिधीमहि। अग्ने मनुष्वदङ्गिरः। [३५]।

देवान्देवाय ते यज। अग्निरहि वाजिनव्विँशे। ददाति विश्वचर्षणिः।

## ।। काठकम् ।।

अग्नी राये स्वाभुवम्। सप्रीतो याति वार्यम्।
इषꣳ स्तोतृभ्य आभर। पृष्टो दिवि पृष्टो
अग्निः पृथिव्याम्। पृष्टो विश्वा ओषधी-
राविवेश। वैश्वानर-स्सहसा पृष्टो अग्निः।
सनो दिवा सरिषः पातु नक्तम्।। [३६]।।

(असीषदनु यविष्ठमङ्गिरो नक्तम्)।।

*******

७ अयव्वाँव यः पवते। सोऽग्नि-
र्नाचिकेतः। स यत्प्राङ्पवते। तदस्य शिरः।
अथ यद्दक्षिणा। स दक्षिणः पक्षः। अथ
यत्प्रत्यक्। तत्पुच्छम्। यदुदङ्ङ्। स उत्तरः
पक्षः। [३७]।।

अथ यथ्सव्वाँति। तदस्य समञ्चनञ्च
प्रसारणञ्च। अथो संपदेवास्य सा। स ँ हवा
अस्मै सकामः पद्यते। यत्कामो यजते।
योऽग्निन्नाचिकेतञ्चिनुते। य उचैनमेवव्वेँद।

योहवा अग्ने-र्नाचिकेतस्यायतनं प्रतिष्ठा-

।। काठकम् ।।

व्वँद। आयतनवान्भवति। गच्छति प्रतिष्ठाम्।
[३८]। हिरण्यव्वँा अग्ने-र्नाचिकेतस्यायतनं
प्रतिष्ठा। य एवव्वँद। आयतनवान्भवति।
गच्छति प्रतिष्ठाम्।

यो हवा अग्ने-र्नाचिकेतस्य शरीरव्वँद।
स शरीर एव स्वर्गल्लँोकमेति। हिरण्यव्वँा
अग्ने-र्नाचिकेतस्य शरीरम्। य एवव्वँद।
स शरीर एव स्वर्गल्लँोकमेति।

अथो यथा रुक्म उत्तप्तो भाय्यात्।[३९]
एवमेव स तेजसा यशसा। अस्मिꣳश्च
लोकेऽमुष्मिꣳश्च भाति। उरवो हवै नामैते-

॥ काठकम् ॥

लोकाः। योऽवरेणादित्यम्।

अथ हैते वरीयाᳬसो लोकाः। ये परेणादित्यम्।

अन्तवन्तᳬहवा एष क्षय्यल्ँलोकञ्जयति। योऽवरेणादित्यम्।

अथ हैषोऽनन्तमपार- मक्षय्य- ल्ँलोकञ्जयति। यः परेणादित्यम्। [४०]।

अनन्तᳬ हवा अपारमक्षय्य-ल्ँलोकञ्जयति। योऽग्नि- न्नाचिकेत- ञ्चिनुते। यउचैनमेवव्ँवेद।

।। काठकम् ।।

अथो यथा रथे तिष्ठन्पक्षसी पर्यावर्तमाने प्रत्यपेक्षते। एवमहोरात्रे प्रत्यपेक्षते। नास्याहोरात्रे लोकमाप्नुतः। योऽग्निन्नाचिकेतञ्चिनुते। य उ चैनमेवव्वँवेद।। [४१]।।

*(उत्तरः पक्षो गच्छति प्रतिष्ठां भाय्याद्यः परेणादित्यमष्टौ च)* ।।

********

८ उशन् हवै वाजश्रवस-
स्सर्ववेदसन्ददौ। तस्य ह नचिकेता नाम पुत्र
आस। त ँ ह कुमार ँ सन्तम्। दक्षिणासु
नीयमानासु श्रद्धाऽऽविवेश।

सहोवाच। तत कस्मै मान्दास्यसीति।
द्वितीयन्तृतीयम्। त ँ ह परीत उवाच। मृत्यवे
त्वा ददामीति।

त ँ ह स्मोत्थित व्ँवागभिवदति। [४२]।।
गौतमकुमारमिति।

सहोवाच। परेहि मृत्योर्गृहान्। मृत्यवे वै

त्वांऽदामिति। तव्ँवै प्रवसन्तङ्गन्तासीति होवाच।

तस्यंस्म तिस्रो रात्रीरनाँश्वान्गृहे वंसतात्। स यदि त्वा पृच्छेत्। कुमार कति रात्रीरवाथ्सीरिति। तिस्र इति प्रतिब्रूतात्।

किं प्रथमाꣳ रात्रिमाश्ना इति। [४३]। प्रजान्त इति। किन्द्वितीयामिति। पशूꣳस्त इति। किन्तृतीयामिति। साधुकृत्यान्त इति।

तव्ँवै प्रवसन्तञ्जगाम। तस्य ह तिस्रो रात्रीरनाँश्वान्गृह उवास। तमागत्य पप्रच्छ।

कुमार कति रात्रीरवात्सीरिति। तिस्र इति प्रत्युवाच। [४४]।।

किं प्रथमाᳪं रात्रिमाश्ना इति। प्रजान्त इति। किन्द्वितीयामिति। पशूᳪंस्त इति। किन्तृतीयामिति। साधुकृत्यान्त इति। नमस्ते अस्तु भगव इति होवाच।

वरँवृणीष्वेति। पितरमेव जीवन्नयानीति। द्वितीयँवृणीष्वेति। [४५]।। इष्टापूर्तयो र्मेऽक्षितिं ब्रूहीति होवाच।

तस्मै हैतमग्नि-न्नाचिकेत-मुवाच। ततो वै

॥ काठकम् ॥

तस्येष्टापूर्ते नाक्षीयेते। नास्येष्टापूर्ते क्षीयेते।
योऽग्नि-न्नाचिकेत-ञ्चिनुते। य उचैनमेवव्वेँद।

तृतीय-व्वृँणीष्वेति। पुनर्मृत्यो-र्मेऽपजितिं
ब्रूहीति होवाच। तस्मै हैतमग्नि-न्नाचिकेत-
मुवाच। ततो वै सोऽपपुनर्मृत्युमजयत्।[४६]
अपपुनर्मृत्युञ्जयति। योऽग्निन्नाचिकेतञ्चिनुते।
य उ चैनमेव व्वेँद।

प्रजापति वै प्रजाकाम- स्तपोऽतप्यत।
स हिरण्यमुदास्यत्। तदग्नौ प्रास्यत्। तदस्मै
नाच्छदयत्।

।। काठकम् ।।

तद्द्वितीयं प्रास्यत्। तदस्मै नैवाच्छदयत्। तत्तृतीयं प्रास्यत्। [४७]।। तदस्मै नैवाच्छदयत्।

तदात्मन्नेव हृदय्येऽग्नौ वैश्वानरे प्रास्यत्। तदस्मा अच्छदयत्। तस्माद्धिरण्य-ङ्कनिष्ठ न्धनानाम्। भुञ्जत्प्रियतमम्। हृदयजँ हि।

स वै तमेव नाविन्दत्। यस्मै तान्दक्षिणामनेष्यत्। ताँ स्वायैव हस्ताय दक्षिणायानयत्। तां प्रत्यगृह्णात्।। [४८]।

दक्षाय त्वा दक्षिणां प्रतिगृह्णामीति। सोऽदक्षत दक्षिणां प्रतिगृह्य। दक्षते ह वै

।। काठकम् ।।

दक्षिणां प्रतिगृह्य। य एवव्वेद। एतद्धस्म वैतद्विद्वाᳪसो वाजश्रवसा गोतमाः।

अप्यनूदेश्यान्दक्षिणां प्रतिगृह्णन्ति। उभयेन वयन्दक्षिष्यामह एव दक्षिणां प्रतिगृह्येति। तेऽदक्षन्त दक्षिणां प्रतिगृह्य। दक्षते हवै दक्षिणां प्रतिगृह्य। य एवव्वेद। प्रहान्यं व्लीनाति।। [४९]।।

(वदत्याश्ना इत्युवाच द्वितीयं व्वृणीष्वेत्यजय-त्तृतीयं प्रास्यदगृह्णाद्य एवव्वेदैकञ्च)।।

* * * * * * *

।। काठकम् ।।

९ तं᳐ हैतमेके पशुबन्ध एवोत्तरवेद्या-
ञ्चिन्वते। उत्तरवेदिसम्मित एषोऽग्निरिति
वदन्तः। तन्न तथा कुर्यात्। एतमग्निङ्कामेन
व्यर्द्धयेत्। स एनङ्कामेन व्यृद्धः। कामेन
व्यर्द्धयेत्।

सौम्ये वावैनमद्ध्वरे चिन्वीत। यत्र वा
भूयिष्ठा आहुतयो हूयेरन्न्। एतमग्निङ्कामेन
समर्द्धयति। स एनङ्कामेन समृद्धः। [५०]।
कामेन समर्द्धयति।

अथ हैनं पुरर्षयः। उत्तरवेद्यामेव

सत्रियमचिन्वत। ततो वै तेऽविन्दन्त प्रजाम्।
अभिस्वर्ग-ल्ँलोकमजयन्न्। विन्दत एव
प्रजाम्। अभिस्वर्ग-ल्ँलोकञ्जयति। योऽग्नि-
न्नाचिकेत-ञ्चिनुते। य उ चैनमेव व्ँवेद।

अथ हैन व्ँवायुर् ऋद्धिकामः। [५१]।
यथा न्युप्तमेवोपदधे। ततो वै स एतामृद्धि-
मादृध्नोत्। यामिदव्ँवायुर् ऋद्धः।
एतामृद्धिमृदृध्नोति। यामिदव्ँवायुर् ऋद्धः।
योऽग्निन्नाचिकेतञ्चिनुते। य उ चैनमेवव्ँवेद।

अथ हैनङ्गोबलो वार्ष्णः पशुकामः।

।। काठकम् ।।

पाङ्क्तमेव चिक्ये। पञ्च पुरस्तात्। [५२]।
पञ्च दक्षिणतः। पञ्चपश्चात्। पञ्चोत्तरतः।
एकां मद्ध्ये। ततो वै स सहस्रं पशून्
प्राप्नोत्। प्रसहस्रं पशूनाप्नोति। योऽग्नि-
न्नाचिकेतञ्चिनुते। य उ चैनमेव्वँवेद।

अथ हैनं प्रजापति ज्यैष्ठ्यकामो यश-
स्कामः प्रजननकामः। त्रिवृतमेव चिक्ये।
[५३]। सप्त पुरस्तात्। तिस्रो दक्षिणतः।
सप्त पश्चात्। तिस्र उत्तरतः। एकां मद्ध्ये।
ततो वै स प्रयशो ज्यैष्ठ्यमाप्नोत्।

।। काठकम् ।।

एतां प्रजातिं प्राजायत। यामिदं प्रजाः प्रजायन्ते। त्रिवृद्वै ज्यैष्ठ्यम्। माता पिता पुत्रः [५४]। त्रिवृत्प्रजननम्। उपस्थो योनिर्मद्ध्यमा। प्रयशो ज्यैष्ठ्यमाप्नोति।

एतां प्रजातिं प्रजायते। यामिदं प्रजाः प्रजायन्ते। योऽग्निन्नाचिकेतञ्चिनुते। य उ चैनमेवँव्वेद।

अथ हैनमिन्द्रो ज्यैष्ठ्यकामः। ऊद्ध्वा एवोपदधे। ततोवै स ज्यैष्ठ्यमगच्छत्।[५५] ज्यैष्ठ्यङ्गच्छति। योऽग्निन्नाचिकेतञ्चिनुते।

॥ काठकम् ॥

य उचैनमेवव्वेँद।

अथ हैनमसावादित्य स्स्वर्गकामः। प्राचीरेवोपदधे। ततो वै सोऽभिस्वर्गल्लोँकमजयत्। अभिस्वर्गल्लोँकञ्जयति। योऽग्निन्नाचिकेत-ञ्चिनुते। य उचैनमेवव्वेँद।

स यदीच्छेत्। [५२]। तेजस्वी यशस्वी ब्रह्मवर्चसी स्यामिति। प्राङाहोतुर्द्धिष्ण्यादुत्सर्पेत्। येयं प्रागाद्यशस्वती। सा मा प्रोर्णोतु। तेजसा यशसा ब्रह्मवर्चसेनेति। तेजस्व्येव यशस्वी ब्रह्मवर्चसी भवति।

॥ काठकम् ॥

अथ यदीच्छेत्। भूयिष्ठं मे श्रद्दधीरन्न्। भूयिष्ठा दक्षिणा नयेयुरिति। दक्षिणासु नीयमानासु प्राच्येहि प्राच्येहीति प्राची जुषाणावेत्त्वाज्यस्य स्वाहेति स्रुवेणोपहत्याहवनीये जुहुयात्। [५७]। भूयिष्ठमेवास्मै श्रद्दधते। भूयिष्ठा दक्षिणा नयन्ति।

पुरीषमुपधाय। चितिक्लृप्तिभिरभिमृश्य। अग्निं प्रणीयोपसमाधाय। चतस्र एता आहुतीर्जुहोति।

त्वमग्ने रुद्र इति शतरुद्रीयस्य रूपम्।

।। काठकम् ।।

अग्नाविष्णू इति वसोर्द्धारायाः। अन्नपत इत्यन्नहोमः। सप्त ते अग्ने समिध-स्सप्तजिह्वा इति विश्वप्रीः।। [५८]।।

*(समृद्ध ऋद्धिकामः पुरस्ताच्चिक्ये पुत्रो ऽगच्छदिच्छे - ज्जुहुयाद्विश्वप्रीः)।।*

*(पुरर्षयो वायुर्गोबल स्सहस्रं प्रजापति स्सप्रयश स्त्रिवृदिन्द्रो ऽसावादित्य स्सयदीच्छेदथ यदीच्छेत्)।।*

*********

॥ काठकम् ॥

१० यां प्रथमा-मिष्टकामुप-दधाति। इमन्तया लोकमभिजयति। अथो या अस्मिल्ँल्लोके देवताः। तासा॰ँ सायुज्य॰ँ सलोकतामाप्नोति।

यान्द्वितीयामुपदधाति। अन्तरिक्षलोकन्तयाऽभिजयति। अथो या अन्तरिक्षलोके देवताः। तासा॰ँ सायुज्य॰ँ सलोकतामाप्नोति।

यान्तृतीयामुपदधाति। अमुन्तया लोकमभिजयति। [५९]। अथो या अमुष्मिल्ँल्लोके देवताः। तासा॰ँ सायुज्य॰ँ सलोकतामाप्नोति।

अथो या अमूरितरा अष्टादश। य एवामी उरवश्च वरीया॑ँसश्च लोकाः। तानेव ताभिरभिजयति। कामचारो ह्वा अस्योरुषु च वरीयस्सु च लोकेषु भवति। योऽग्निन्नाचिकेतञ्चिनुते। य उ चैनमेवव्वेद।

सव्वँथ्सरो वा अग्नि-र्नाचिकेतः। तस्य वसन्तश्शिरः। [६०]। ग्रीष्मो दक्षिणः पक्षः। वर्षा उत्तरः। शरत्पुच्छम्। मासाः कर्मकाराः। अहोरात्रे शतरुद्रीयम्। पर्जन्यो वसोर्द्धारा। यथा वै पर्जन्य स्सुवृष्ट-व्वृँष्ट्वा।

## ।। काठकम् ।।

प्रजाभ्य-स्सर्वान्कामान्-थ्संपूरयति। एवमेव स तस्य सर्वान्कामान्-थ्संपूरयति। योऽग्निन्नाचिकेतञ्चिनुते। [६१]। य उचैनमेवव्वेँद।

सव्वँथ्सरो वा अग्निर्नाचिकेतः। तस्य वसन्तश्शिरः। ग्रीष्मो दक्षिणः पक्षः। वर्षाः पुच्छम्। शरदुत्तरः पक्षः। हेमन्तो मद्ध्यम्। पूर्वपक्षाश्चितयः। अपरपक्षाः पुरीषम्। अहोरात्राणीष्टकाः। एष वाव सोऽग्निरग्निमयः पुनर्णवः। अग्निमयो हवै पुनर्णवो भूत्वा। स्वर्गल्लोँकमेति। आदित्यस्य

।। काठकम् ।।

सायुज्यम्। योऽग्नि-न्नाचिकेत-ञ्चिनुते। य उ चैनमेवव्वँद।। [६२]।।

*(अमुन्तया लोकमभिजयति शिरश्चिनुत इष्टकाष्षट्च)।।*

*********

।। काठकम् ।।

[लोकस्त्वमग्ने ऽग्नाविष्णू अन्नपते सप्त ते अग्ने यत्तेऽचितमयमुशन् ह त ँ ह यां प्रथमामिष्टकान्दश]।। [१०]।।

[लोकआदित्य ओजोऽस्यूद्ध्र्वादिगनन्त ँ हवै कामेन ग्रीष्मो द्विषष्टिः]।।

[लोकोऽसि य उ चैनमेवव्ँवेद]।।

।। हरिः ओ(३)म् ।।

।। इति तैत्तिरीय यजुर्ब्राह्मणे काठके द्वितीयः प्रश्नः समाप्तः ।।

* * * * *

। श्रीगणेश शारदा गुरुभ्यो नमः ।

। श्रीवेदव्यासाय नमः ।

# ।। काठकम् ।।

## (तृतीयः प्रश्नः)

हरिः ओ(४)म्

१ तुभ्यन्ता अङ्गिरस्तमाश्याम तङ्काममग्ने। आशानान्त्वा विश्वा आशाः। अनु नोऽद्यानुमतिरन्विदनुमते त्वम्। कामो भूतस्य कामस्तदग्रे। ब्रह्मजज्ञानं पिता विराजाम्। यज्ञो रायोऽयय्यँज्ञः। आपो भद्रा आदित्पश्यामि। तुभ्यं भरन्ति यो देह्यः। पूर्वन्देवा अपरेण प्राणापानौ। हव्यवाहꣳ स्विष्टम्।। [१]।। (*तुभ्यन्दश*)।।

*****

।। काठकम् ।।

२ देवेभ्यो वै स्वर्गो लोकस्तिरो-
ऽभवत्। ते प्रजापतिमब्रुवन्। प्रजापते स्वर्गो
वै नो लोकस्तिरोऽभूत्। तमन्विच्छेति।
तय्यँज्ञक्रतुभिरन्वैच्छत्। तय्यँज्ञक्रतुभि र्नान्व-
विन्दत्। तमिष्टिभिरन्वैच्छत्। तमिष्टिभिरन्व-
विन्दत्। तदिष्टीनामिष्टित्वम्। एष्टयो हवै
नाम। ता इष्टय इत्याचक्षते परोक्षेण।
परोक्षप्रिया इव हि देवाः। [२]।।

तमाशाऽब्रवीत्। प्रजापत आशया वै
श्राम्यसि। अहमुवा आशाऽस्मि। मान्नुयजस्व।
अथ ते सत्याऽऽशा भविष्यति।

## ।। काठकम् ।।

अनुस्वर्ग-ल्लोँक-व्वेँथस्यसीति। स एतमग्नये
कामाय पुरोडाश- मष्टाकपाल- न्निरवपत्।
आशायै चरुम्। अनुमत्यै चरुम्। ततो वै
तस्य सत्याऽऽशाऽभवत्। अनुस्वर्गल्लोँक-
मविन्दत्। सत्या हवा अस्याशा भवति। अनु
स्वर्गल्लोँकव्विँन्दति। य एतेन हविषा यजते।
य उचैनदेवव्वेँद। सोऽत्र जुहोति। अग्नये
कामाय स्वाहाऽऽशायै स्वाहा। अनुमत्यै
स्वाहा प्रजापतये स्वाहा। स्वर्गाय लोकाय
स्वाहाऽग्नये स्विष्टकृते स्वाहेति। [३]।।

## ।। काठकम् ।।

तङ्कामोऽब्रवीत्। प्रजापते कामेन वैश्राम्यसि। अहमुवै कामोऽस्मि। मान्नुयजस्व। अथ ते सत्यः कामो भविष्यति। अनुस्वर्गल्लँोकव्वँेथ्स्यसीति। स एतमग्नये कामाय पुरोडाश-मष्टाकपाल-न्निरवपत्। कामाय चरुम्। अनुमत्यै चरुम्। ततो वै तस्य सत्यः कामोऽभवत्। अनुस्वर्ग-ल्लँोक-मविन्दत्। सत्यो हवा अस्य कामो भवति। अनुस्वर्गल्लँोकव्विँन्दति। य एतेन हविषा यजते। य उचैनदेव्वँेद। सोऽत्रजुहोति। अग्नये कामाय स्वाहा कामाय स्वाहा।

।। काठकम् ।।

अनुमत्यै स्वाहा प्रजापतये स्वाहा। स्वर्गाय लोकायस्वाहाऽग्नये स्विष्टकृते स्वाहेति।[४]

तं ब्रह्माऽब्रवीत्। प्रजापते ब्रह्मणा वैश्राम्यसि। अहमुवै ब्रह्माऽस्मि। मान्नुयजस्व। अथ ते ब्रह्मण्वान् यज्ञो भविष्यति। अनुस्वर्ग-ल्ँलोकव्ँवेथ्स्यसीति। स एतमग्नये कामाय पुरोडाश-मष्टाकपाल-न्निरवपत्। ब्रह्मणे चरुम्। अनुमत्यै चरुम्। ततो वै तस्य ब्रह्मण्वान् यज्ञोऽभवत्। अनुस्वर्गल्ँलोक-मविन्दत्। ब्रह्मण्वान् हवा अस्य यज्ञो भवति। अनुस्वर्ग-ल्ँलोक-व्ँविन्दति। य एतेन हविषा

यजते। य उचैनदेवव्वेद। सोऽत्र जुहोति। अग्नये कामाय स्वाहा ब्रह्मणे स्वाहा। अनुमत्यै स्वाहा प्रजापतये स्वाहा। स्वर्गाय लोकाय स्वाहा ऽग्नये स्विष्टकृते स्वाहेति। [५]।।

तय्यँज्ञोऽब्रवीत्। प्रजापते यज्ञेन वैश्राम्यसि। अहमुवै यज्ञोऽस्मि। मान्नुयजस्व। अथ ते सत्यो यज्ञो भविष्यति। अनुस्वर्गल्लोँकव्वैथ्स्यसीति। स एतमग्नये कामाय पुरोडाश- मष्टाकपाल- न्निरवपत्। यज्ञाय चरुम्। अनुमत्यै चरुम्। ततो वै

।। काठकम् ।।

तस्य सत्यो यज्ञोऽभवत्। अनु स्वर्गल्ँलोक-
मविन्दत्। सत्यो हवा अस्य यज्ञो भवति।
अनुस्वर्गल्ँलोकव्ँविन्दति। य एतेन हविषा
यजते। य उचैनदेवव्ँवेद। सोऽत्र जुहोति।
अग्नये कामाय स्वाहा यज्ञाय स्वाहा।
अनुमत्यै स्वाहा प्रजापतये स्वाहा। स्वर्गाय
लोकाय स्वाहाऽग्नये स्विष्टकृते स्वाहेति।
[६]।।

तमापोऽब्रुवन्न्। प्रजापतेऽफ्सु वै सर्वे
कामाश्शिश्रताः। वयमुवा आपस्स्मः। अस्मा-
न्नुयजस्व। अथ त्वयि सर्वे कामाश्श्रयिष्यन्ते।

।। काठकम् ।।

अनुस्वर्गल्ँल्लोकव्ँव्वेथ्स्यसीति। स एतमग्नये कामाय पुरोडाश- मष्टाकपाल- न्निरवपत्। अद्भ्यश्चरुम्। अनुमत्यै चरुम्। ततो वै तस्मिन्थ्सर्वे कामा अश्रयन्त। अनुस्वर्ग- ल्ँल्लोकमविन्दत्। सर्वे ह्वा अस्मिन्कामा- श्श्रयन्ते। अनुस्वर्गल्ँल्लोकव्ँविन्दति। य एतेन हविषा यजते। य उचैनदेवव्ँव्वेद। सोऽत्र जुहोति। अग्नये कामाय स्वाहाऽद्भ्यस्स्वाहा। अनुमत्यै स्वाहा प्रजापतये स्वाहा। स्वर्गाय लोकाय स्वाहाऽग्नये स्विष्टकृते स्वाहेति। [७]।।

।। काठकम् ।।

तमग्निर्बलिमानब्रवीत्। प्रजापतेऽग्नये वै बलिमते सर्वाणि भूतानि बलिꣳ हरन्ति। अहमुवा अग्निर्बलिमानस्मि। मान्नुयजस्व। अथ ते सर्वाणि भूतानि बलिꣳ हरिष्यन्ति। अनुस्वर्गल्लँलोकव्वँवेथ्स्यसीति। स एतमग्नये कामाय पुरोडाश- मष्टाकपाल- न्निरवपत्। अग्नये बलिमते चरुम्। अनुमत्यै चरुम्। ततो वै तस्मै सर्वाणि भूतानि बलिमहरन्न्। अनुस्वर्गल्लँलोकमविन्दत्। सर्वाणि हवा अस्मै भूतानि बलिꣳ हरन्ति। अनुस्वर्गल्लोकं

।। काठकम् ।।

व्विँन्दति। य एतेन हविषा यजते। य उ चैनदेवव्वेँद। सोऽत्र जुहोति। अग्नये कामाय स्वाहाऽग्नये बलिमते स्वाहा। अनुमत्यै स्वाहा प्रजापतये स्वाहा। स्वर्गाय लोकाय स्वाहाऽग्नये स्विष्टकृते स्वाहेति। [८] ।।

तमनुवित्तिरब्रवीत्। प्रजापते स्वर्गव्वैँ लोकमनुविवित्ससि। अहमुवा अनुवित्तिरस्मि। मान्नुयजस्व। अथ ते सत्याऽनुवित्तिर्भविष्यति। अनुस्वर्गल्लोँकव्वेँथ्स्यसीति। स एतमग्नये कामाय पुरोडाश- मष्टाकपाल- न्निरवपत्। अनुवित्त्यै चरुम्। अनुमत्यै चरुम्। ततो वै

।। काठकम् ।।

तस्य सत्यानुवित्तिरभवत्। अनुस्वर्गल्ँल्लोक-
मविन्दत्। सत्या हवा अस्यानुवित्तिर्भवति।
अनुस्वर्गल्लोकव्ँविन्दति। य एतेन हविषा
यजते। य उचैनदेवव्ँवेद। सोऽत्र जुहोति।
अग्नये कामाय स्वाहाऽनुवित्त्यै स्वाहा।
अनुमत्यै स्वाहा प्रजापतये स्वाहा। स्वर्गाय
लोकाय स्वाहाऽग्नये स्विष्टकृते स्वाहेति।
[९] ।।

ता वा एतास्सप्त स्वर्गस्य लोकस्य
द्वारः। दिवश्श्येनयोऽनुवित्तयो नाम। आशा
प्रथमाँ रक्षति। कामो द्वितीयाम्।

।। काठकम् ।।

ब्रह्म तृतीयाम्। यज्ञश्चतुर्थीम्। आपः
पञ्चमीम्। अग्निर्बलिमान्थ्षष्ठीम्। अनुवित्ति
स्सप्तमीम्। अनुहवै स्वर्गल्लोकव्विँन्दति।
कामचारोऽस्य स्वर्गे लोके भवति। य
एताभिरिष्टिभिर्यजते। य उचैना एवव्वेद।
तास्वन्विष्टि। पष्ठौही वरान्दद्यात्कꣳसञ्च।
श्त्रियैचाभारꣳसमृद्ध्यै।।[१०]।।

**************

।। काठकम् ।।

३ तपसा देवा देवतामग्र आयन्न्। तपसर्षय-स्स्वरन्वविन्दन्न्। तपसा सपत्नान्-प्रणुदामारातीः। येनेदव्विँश्वं परिभूतय्यँदस्ति। प्रथमजन्देवँ हविषा विधेम। स्वयंभु ब्रह्मपरमन्तपो यत्। स एव पुत्रस्स पिता स माता। तपोहयक्षं प्रथमँ संबभूव। श्रद्धयादेवो देवत्वमश्नुते। श्रद्धा प्रतिष्ठा लोकस्य देवी। [११]।।

सानो जुषाणोप यज्ञमागात्। कामवथ्सा-ऽमृतन्दुहाना। श्रद्धादेवी प्रथमजा ऋतस्य। विश्वस्य भर्त्री जगतः प्रतिष्ठा। ताँश्रद्धाँ

।। काठकम् ।।

हविषा यजामहे। सा नो लोकममृतन्दधातु। ईशाना देवी भुवनस्याधिपत्नी। आगात्सत्य॰ हविरिदञ्जुषाणम्। यस्माद्देवा जज्ञिरे भुवनञ्च विश्वे। तस्मै विधेम हविषा घृतेन। [१२]।।

यथा देवैस्सधमादं मदेम। यस्य प्रतिष्ठो-र्वन्तरिक्षम्। यस्माद्देवा जज्ञिरे भुवनञ्च सर्वे। तत्सत्यमर्चदुपयज्ञन्न आगात्। ब्रह्माहुतीरुप-मोदमानम्। मनसो वशे सर्वमिदं बभूव। नान्यस्य मनो वशमन्वियाय। भीष्मो हि देव- स्सहस- स्सहीयान्। स नो जुषाण उप

।। काठकम् ।।

यज्ञमागात्। आकूतीनामधिपति-ञ्चेतसाञ्च। [१३]।।

सङ्कल्पजूतिन्देवं विपश्चिमम्। मनो राजानमिह वर्द्धयन्तः। उपह्वेऽस्यसुमतौ स्याम। चरणं पवित्र-व्वितंतं पुराणम्। येन पूतस्तरति दुष्कृतानि। तेन पवित्रेण शुद्धेन पूताः। अति पाप्मानमरातिन्तरेम। लोकस्य द्वारमर्चिमत्पवित्रम्। ज्योतिष्मद्- भ्राजमानं महस्वत्। अमृतस्य धारा बहुधा दोहमानम्। चरणन्नो लोके सुधितान्दधातु। अग्निर्मूर्द्धा भुवः। अनु नोऽद्यानुमतिरन्विदनुमतेत्वम्।

हव्यवाहँस्विष्टम्।। [१४]।। ******

(देवी घृतेन चेतसाञ्च दोहमानञ्चत्वारि च)।।

***********

४ देवेभ्यो वै स्वर्गो लोकस्तिरोऽभवत्। ते प्रजापतिमब्रुवन्न्। प्रजापते स्वर्गो वै नो लोकस्तिरोऽभूत्। तमन्विच्छेति। तय्यँज्ञक्रतुभिरन्वैच्छत्। त य्यँज्ञक्रतुभिर्नान्वविन्दत्। तमिष्टिभिरन्वैच्छत्। तमिष्टिभिरन्वविन्दत्। तदिष्टीनामिष्टित्वम्। एष्टयो हवै नाम। ता इष्टय इत्याचक्षते परोक्षेण। परोक्षप्रिया इव हि देवाः। [१५]।।

।। काठकम् ।।

तन्तपोऽब्रवीत्। प्रजापते तपसा वै श्राम्यसि। अहमुवै तपोऽस्मि। मान्नुयजस्व। अथ ते सत्यन्तपो भविष्यति। अनुस्वर्गल्ँलोकव्ँवेत्थ्स्यसीति। स एतमाग्नेयमुष्टाकपालन्निरवपत्। तपसे चरुम्। अनुमत्यै चरुम्। ततो वै तस्य सत्यन्तपोऽभवत्। अनुस्वर्गल्ँलोकमविन्दत्। सत्यꣳ हवा अस्य तपो भवति। अनुस्वर्गल्लोकव्ँविन्दति। य एतेन हविषा यजते। य उचैनदेवव्ँवेद। सोऽत्र जुहोति। अग्नये स्वाहा तपसे स्वाहा। अनुमत्यै स्वाहा प्रजापतये

।। काठकम् ।।

स्वाहा। स्वर्गाय लोकाय स्वाहाऽग्नये स्विष्टकृते स्वाहेति।[१६]।।

तꣳ श्रद्धाऽब्रवीत्। प्रजापते श्रद्धया वै श्राम्यसि। अहमुवै श्रद्धाऽस्मि। मान्नुयजस्व। अथ ते सत्याश्रद्धा भविष्यति। अनुस्वर्ग-ल्लँलोक-व्वँेथ्स्यसीति। स एतमाग्नेय-मष्टाकपालन्निरवपत्। श्रद्धायै चरुम्। अनुमत्यै चरुम्। ततो वै तस्य सत्याश्रद्धा-ऽभवत्। अनुस्वर्गल्लँलोकमविन्दत्। सत्या हवा अस्य श्रद्धा भवति। अनुस्वर्गल्लोकं-व्विँन्दति। य एतेन हविषा यजते।

।। काठकम् ।।

य उचैनदेव्वँद। सोऽत्र जुहोति।अग्नये स्वाहा श्रद्धायै स्वाहा। अनुमत्यै स्वाहा प्रजापतये स्वाहा। स्वर्गाय लोकाय स्वाहाऽग्नये स्विष्टकृते स्वाहेति। [१७]।।

तꣳ सत्यमब्रवीत्। प्रजापते सत्येन वै श्राम्यसि। अहमुवै सत्यमस्मि। मान्नुयजस्व। अथ ते सत्यꣳसत्यं भविष्यति। अनुस्वर्गल्लोँक-व्वँेथ्स्यसीति। स एतमाग्नेय-मष्टाकपालन्निरवपत्। सत्याय चरुम्। अनुमत्यै चरुम्। ततो वै तस्य सत्यꣳ सत्यमभवत्। अनुस्वर्गल्लोँक-

।। काठकम् ।।

मविन्दत्। सत्यꣳ ह्वा अस्य सत्यं भवति।
अनुस्वर्गल्ँल्लोकव्ँविन्दति। य एतेन हविषा
यजते। यउचैनदेव्ँवेद। सोऽत्र जुहोति।अग्नये
स्वाहा सत्याय स्वाहा। अनुमत्यै स्वाहा
प्रजापतये स्वाहा। स्वर्गाय लोकाय
स्वाहाऽग्नये स्विष्टकृते स्वाहेति। [१८]।।

तं मनोऽब्रवीत्। प्रजापते मनसा वै
श्राम्यसि। अहमुवै मनोऽस्मि। मान्नुयजस्व।
अथ ते सत्यं मनो भविष्यति। अनुस्वर्ग-
ल्ँल्लोक-व्ँवेथ्स्यसीति। स एतमाग्नेय-
मष्टाकपाल- न्निरवपत्। मनसे चरुम्।

।। काठकम् ।।

अनुमत्यै चरुम्। ततो वै तस्य सत्यं मनोऽभवत्। अनुस्वर्ग- ल्लोकमविन्दत्। सत्यꣳह्वा अस्य मनो भवति। अनुस्वर्ग- ल्लोकंव्विँन्दति। य एतेन हविषा यजते। यउचैनदेव्वँेद। सोऽत्र जुहोति। अग्नये स्वाहा मनसे स्वाहा। अनुमत्यै स्वाहा प्रजापतये स्वाहा। स्वर्गाय लोकाय स्वाहाऽग्नये स्विष्टकृते स्वाहेति। [१९]।।

तञ्चरणमब्रवीत्। प्रजापते चरणेन वै श्राम्यसि। अहमुवै चरणमस्मि। मान्नुयजस्व। अथ ते सत्यञ्चरणं भविष्यति। अनुस्वर्ग-

।। काठकम् ।।

ल्लोँकव्वेँत्थस्यसीति। स एतमाग्नेय-
मष्टाकपाल- न्निरवपत्। चरणाय चरुम्।
अनुमत्यै चरुम्। ततो वै तस्य सत्यञ्चरण-
मभवत्। अनुस्वर्गल्लोँकमविन्दत्। सत्यꣳ
हवा अस्य चरणं भवति। अनु स्वर्गल्लोँकं
व्विँन्दति। य एतेन हविषा यजते। य उचैनदे-
वव्वेँद। सोऽत्र जुहोति। अग्नये स्वाहा
चरणाय स्वाहा। अनुमत्यै स्वाहा प्रजापतये
स्वाहा। स्वर्गाय लोकाय स्वाहाऽग्नये
स्विष्टकृते स्वाहेति। [२०]।।

तावा एताः पञ्चस्वर्गस्य लोकस्य द्वारः।

## ।। काठकम् ।।

अपाघा अनुवित्तयो नाम। तपः प्रथमाँ रक्षति। श्रद्धा द्वितीयाम्। सत्यन्तृतीयाम्। मनश्चतुर्थीम्। चरणं पञ्चमीम्। अनु हवै स्वर्गल्ँलोकं व्विँन्दति। कामचारोऽस्य स्वर्गे लोके भवति। य एताभिरिष्टिभि र्यजते। य उचैना एवव्ँवेद। तास्वन्विष्टि। पष्ठौही वरान्दद्यात्कँसञ्च। स्त्रियैचाभारँ समृद्ध्यै।। [२१]।। *******

५ ब्रह्म वै चतुर्होतारः। चतुर्होतृभ्योऽधियज्ञो निर्मितः। नैनँ शप्तम्। नाभिचरितमागच्छति। य एवव्ँवेद। यो हवै

।। काठकम् ।।

चतुर्होतृणा- ञ्चतुर्होतृत्वव्ँव्वेद। अथो पञ्चहोतृत्वम्। सर्वा हास्मै दिशः कल्पन्ते। वाचस्पतिर्होता दशहोतृणाम्। पृथिवी होता चतुर्होतृणाम्। [२२]।।

अग्निर्होता पञ्चहोतृणाम्। वाग्घोता षड्ढोतृणाम्। महाहविर्होता सप्तहोतृणाम्। एतद्वै चतुर्होतृणाञ्चतुर्होतृत्वम्। अथो पञ्चहोतृत्वम्। सर्वा हास्मै दिशः कल्पन्ते। य एवव्ँव्वेद। एषा वै सर्व विद्या। एतद्भेषजम्। एषा पङ्क्ति- स्स्वर्गस्य लोकस्याञ्जसायनिस्स्रुतिः।।[२३]।।

।। काठकम् ।।

एतान् योऽद्ध्यैत्यछदिर्दरृशे यावत्तरसम्। स्वरेति। अनपब्रवस्सर्वमायुरेति। विन्दते प्रजाम्। रायस्पोषङ्गौपत्यम्। ब्रह्मवर्चसी भवति। एतान् योऽद्ध्यैति। स्पृणोत्यात्मानम्। प्रजां पितृन्। एतान् वा अरुण औपवेशि-र्विदाञ्चकार। [२४] ।।

एतैरधिवादमपाजयत्। अथो विश्वं पाप्मानम्। स्वर्ययौ। एतान् योऽद्ध्यैति। अधिवादञ्जयति। अथो विश्वं पाप्मानम्। स्वरेति। एतैरग्निञ्चिन्वीत स्वर्गकामः। एतैरायुष्कामः। प्रजा पशुकामो वा। [२५] ।।

।। काठकम् ।।

पुरस्ता- द्दशहोतार- मुदञ्चं- मुपदधाति यावत्पदम्। हृदयय्यँजुषी पत्न्यौ च। दक्षिणतः प्राञ्चञ्चतुर् होतारम्। पश्चादुदञ्चं पञ्चहोतारम्। उत्तरतः प्राञ्चँ षड्ढोतारम्। उपरिष्टात्प्राञ्चँसप्तहोतारम्। हृदयय्यँजूँषि पत्न्यश्च। यथावकाशङ्ग्रहान्। यथावकाशं प्रतिग्रहा-ल्लँलोकं पृणाश्च। सर्वाहास्यैता देवताः प्रीता अभीष्टा भवन्ति। [२६]।।

सदेवमग्निञ्चिनुते। रथसंमितश्चेतव्यः। वज्रो वै रथः। वज्रेणैव पाप्मानं भ्रातृव्यँ स्तृणुते। पक्षस्संमितश्चेतव्यः। एतावान्वैरथः।

यावत्पक्षः। रथसंमितमेव चिनुते। इममेव लोकं पशुबन्धेनाभिजयति। अथो अग्निष्टोमेन। [२७]।।

अन्तरिक्षमुक्थ्येन। स्वरतिरात्रेण। सर्वाँल्लोकानहीनेन। अथो सत्रेण। वरो दक्षिणा। वरेणैव वरꣳ स्पृणोति। आत्मा हि वरः। एकविꣳशति- र्दक्षिणा ददाति। एकविꣳशो वा इतस्स्वर्गो लोकः। प्रस्वर्गल्ँलोकमाप्नोति। [२८]।।

असावादित्य एकविꣳशः। अमुमेवादित्यमाप्नोति। शतन्ददाति। शतायुः पुरुष-

।। काठकम् ।।

श्शतेन्द्रियः। आयुष्येवेन्द्रिये प्रतितिष्ठति। सहस्रन्ददाति। सहस्रसंमित-स्स्वर्गो लोकः। स्वर्गस्य लोकस्याभिजित्यै। अन्विष्टक-न्दक्षिणा ददाति। सर्वाणि वया॑सि। [२९]।

सर्वस्याप्त्यै। सर्वस्यावरुद्ध्यै। यदि न विन्देत। मन्थानेतावतो दद्यादोदनान् वा। अश्नुते तङ्काममम्। यस्मै कामायाग्निश्चीयते। पष्ठौहीन्त्वन्तर्वतीन्दद्यात्। सा हि सर्वाणि वया॑सि। सर्वस्याप्त्यै। सर्वस्यावरुद्ध्यै। [३०]।।

हिरण्यन्ददाति। हिरण्यज्योतिरेव स्वर्ग-

ल्ँलोकमेति। वासो ददाति। तेनायुः प्रतिरते। वेदितृतीये यजेत। त्रिषत्या हि देवाः। ससंत्यमग्निञ्चिनुते। तदेतत्पशुबन्धे ब्राह्मणं ब्रूयात्। नेतरेषु यज्ञेषु। यो हवै चतुर् होतृननुसवन-न्तर्पयितव्यान् वेद। [३१]।।

तृप्यति प्रजया पशुभिः। उपैनꣳसोमपीथो नमति। एते वै चतुर्होतारोऽनुसवन-न्तर्पयितव्याः। ये ब्राह्मणा बहुविदः। तेभ्यो यद्दक्षिणा ननयेत्। दुरिष्टꣳस्यात्। अग्निमस्य वृञ्जीरन्न्। तेभ्यो यथा-श्रद्धन्दद्यात्। स्विष्टमेवैतत्क्रियते। नास्याग्निव्वृँञ्जते। [३२]।।

।। काठकम् ।।

हिरण्येष्टको भवति। यावदुत्तममङ्गुलिकाण्डय्यँज्ञपरुषासंमितम्। तेजो हिरण्यम्। यदि हिरण्यन्नविन्देत्। शर्करा अक्ता उपदद्ध्यात्। तेजो घृतम्। सतेजसमेवाग्निञ्चिनुते। अग्निञ्चित्वा सौत्रामण्या यजेत मैत्रावरुण्या वा। वीर्येण वा एष व्यृद्ध्यते। योऽग्निञ्चिनुते। [२३]।।

यावदेव वीर्यम्। तदस्मिन्दधाति। ब्रह्मणस्सायुज्यꣳ सलोकतामाप्नोति। एतासामेव देवतानाꣳ सायुज्यम्। सार्ष्टिताꣳ समान लोकता- माप्नोति। य एतमग्निञ्चिनुते।

।। काठकम् ।।

य उचैनमेवव्ँवेद। एतदेव सावित्रे ब्राह्मणम्। अथो नाचिकेते। [३४]।।

*************

(होता चतुर्होतॄणाꣳ स्तुतिश्चकार वा भवन्त्यग्निष्टोमेनाप्नोति वयाꣳसि वयाꣳसि सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै वेदवृञ्जते चिनुते नव च)।।

*************

।। काठकम् ।।

६ यच्चामृतय्यँच्च मर्त्यम्। यच्च
प्राणिति यच्चन। सर्वास्ता इष्टकाः कृत्वा।
उपकामदुघां दधे। तेनरषिणा तेन ब्रह्मणा।
तया देवतया ऽङ्गिरस्वद्ध्रुवासीद।
सर्वास्स्त्रिय-स्सर्वान्पुंँसः। सर्वन्न स्त्रीपुमञ्च
यत्। सर्वास्ताः। यावन्तः पांँसवो भूमेः।
[३५]।।

।। काठकम् ।।

सङ्ख्यातादेवमायया। सर्वास्ताः। यावन्त ऊषाः पशूनाम्। पृथिव्यां पुष्टिर् हिताः। सर्वास्ताः। यावती- स्सिकता- स्सर्वाः। अफ्वन्तश्च याश्श्रिताः। सर्वास्ताः। यावतीश्शर्करा धृत्यै। अस्यां पृथिव्यामधि। [३६]।।

सर्वास्ताः। यावन्तोऽश्मानोऽस्यां पृथिव्याम्। प्रतिष्ठा सुप्रतिष्ठिताः। सर्वास्ताः। यावती- र्वीरुध- स्सर्वाः। विष्ठिताः पृथिवीमनु। सर्वास्ताः। यावतीरोषधी- स्सर्वाः। विष्ठिताः पृथिवीमनु। सर्वास्ताः। [३७]।।

।। काठकम् ।।

यावन्तो वनस्पतयः। अस्यां पृथिव्यामधि। सर्वास्ताः। यावन्तो ग्राम्याः पशवस्सर्वे। आरण्याश्च ये। सर्वास्ताः। ये द्विपादश्चतुष्पादः। अपाद उदरसर्पिणः। सर्वास्ताः। यावदाञ्जनमुच्यते। [३८]।।

देवत्रा यच्च मानुषम्। सर्वास्ताः। यावत्कृष्णाय सꣳसर्वम्। देवत्रा यच्च मानुषम्। सर्वास्ताः। यावल्लोहाय सꣳसर्वम्। देवत्रा यच्च मानुषम्। सर्वास्ताः। सर्वꣳसीसꣳसर्वन्त्रपु। देवत्रा यच्च मानुषम्। [३९]।।

।। काठकम् ।।

सर्वास्ताः। सर्वꣳ हिरण्यꣳ रजतम्। देवत्रा यच्च मानुषम्। सर्वास्ताः। सर्वꣳसुवर्णꣳहरितम्। देवत्रा यच्च मानुषम्। सर्वास्ता इष्टकाः कृत्वा। उपकामदुघां दधे। तेनर्षिणा तेन ब्रह्मणा। तयादेवतया ऽङ्गिरस्वद्ध्रुवासीद। [४०]।। ****

*(भूमेरधि विष्ठिताः पृथिवीमनु सर्वास्ता उच्यते मानुषꣳसीद)।।*

*[यच्चस्त्रियः पाꣳसव ऊषास्सिकता श्शर्करा अश्मानो वीरुध ओषधी र्वनस्पतयो ग्राम्या येद्विपादो यावदाञ्जन-ङ्कृष्णायं सल्लोहायसꣳसीसꣳ हिरण्यꣳसुवर्णꣳ हरित-मष्टादश]।।*

*******

॥ काठकम् ॥

७ सर्वा दिशो दिक्षु। यच्चान्तर्भूतं प्रतिष्ठितम्। सर्वास्ता इष्टकाः कृत्वा। उप कामदुघां दधे। तेनर्षिणा तेन ब्रह्मणा। तयादेवतयाऽङ्गिरस्वद्ध्रुवासीद।

अन्तरिक्षञ्च केवलम्। यच्चास्मिन्नन्तराहितम्। सर्वास्ताः। आन्तरिक्ष्यश्च याः प्रजाः। [४१]॥

गन्धर्वाप्सरसश्च ये। सर्वास्ताः। सर्वानुदारान्थ्सलिलान्। अन्तरिक्षे प्रतिष्ठितान्। सर्वास्ताः। सर्वानुदारान्थ्सलिलान्। स्थावराः प्रोष्याश्च ये। सर्वास्ताः। सर्वान्धुनिं

॥ काठकम् ॥

सर्वान्ध्वꣳसान्। हिमोयच्च शीयते। [४२]।

सर्वास्ताः। सर्वान्मरीचीन् विततान्।
नीहारो यच्च शीयते। सर्वास्ताः। सर्वाविद्युत
स्सर्वान्थ्स्तनयित्नून्। ह्रादुनीर्यच्च शीयते।
सर्वास्ताः। सर्वास्स्रवन्ती स्सरितः। सर्वमपसु
चरञ्चयत्। सर्वास्ताः। [४३]॥

याश्च कूप्या याश्च नाद्यास्समुद्रियाः।
याश्च वैशन्तीरुत प्रासचीर्याः। सर्वास्ताः।
ये चोत्तिष्ठन्ति जीमूताः। याश्च वर्षन्ति
वृष्टयः। सर्वास्ताः। तपस्तेज आकाशम्।
यच्चाकाशे प्रतिष्ठितम्। सर्वास्ताः।

।। काठकम् ।।

वायुव्वँयाँ सि सर्वाणि। [४४]।

अन्तरिक्षचरञ्च यत्। सर्वास्ताः।
अग्निँ सूर्यञ्चन्द्रम्। मित्रव्वँरुणं भगम्।
सर्वास्ताः। सत्यँश्रद्धान्तपो दमम्। नाम
रूपञ्च भूतानाम्। सर्वास्ता इष्टकाः कृत्वा।
उप कामदुघां दधे। तेनरृषिणा तेन ब्रह्मणा।
तया देवतया ऽङ्गिरस्वद्ध्रुवासीद। [४५]।।

*(प्रजा हिमो यच्च शीयते सर्वास्ता स्सर्वाणि ब्रह्मणैकञ्च)।।*

*[दिशोऽन्तरिक्षमान्तरिक्ष्य उदारानुदारान्धुनिं मरीचीन् विद्युत स्स्रवन्ती यांश्च येच तपो वायुमग्निँ सत्यं पञ्चदश]।।* ************

।। काठकम् ।।

८ सर्वान्दिवꣳ सर्वान्देवान्दिवि। यच्चान्तर्भूतं प्रतिष्ठितम्। सर्वास्ता इष्टकाः कृत्वा। उपकामदुघांदधे। तेनर्षिणा तेन ब्रह्मणा। तया देवतयाऽङ्गिरस्वद्ध्रुवासीद। यावती स्तारका स्सर्वाः। वितता रोचने दिवि। सर्वास्ताः। ऋचो यजूꣳषि सामानि। [४६]।।

अथर्वाङ्गिरसश्च ये। सर्वास्ताः। इतिहासपुराणञ्च। सर्पदेवजनाश्च ये। सर्वास्ताः। ये च लोका ये चालोकाः। अन्तर्भूतं प्रतिष्ठितम्। सर्वास्ताः। यच्च ब्रह्म

॥ काठकम् ॥

यच्चाब्रह्म। अन्तर्ब्रह्म प्रतिष्ठितम्। [४७]॥

सर्वास्ताः। अहोरात्राणि सर्वाणि। अर्द्धमासा ँश्च केवलान्। सर्वास्ताः। सर्वानृतून्- थ्सर्वान्मासान्। सँव्वथ्सरञ्च केवलम्। सर्वास्ताः। सर्वं भूत ँसर्वं भव्यम्। यच्चातोऽधिभविष्यति। सर्वास्ता इष्टकाः कृत्वा। उपकामदुघां दधे। तेनर्षिणा तेन ब्रह्मणा। तया देवतयाऽङ्गिरस्वद्ध्रुवासीद। [४८]॥ *(सामानि ब्रह्मन्प्रतिष्ठितङ्कृत्वा त्रीणि च)॥ [दिवन्तारका ऋचं इतिहासपुराणञ्च येच यच्चाहोरात्राण्यृतून्भूतन्नव]॥* **********

।। काठकम् ।।

९ ऋचां प्राची महती दिगुच्यते। दक्षिणामाहु र्यजुषामपाराम्। अथर्वणामङ्गिरसां प्रतीची। साम्नामुदीची महती दिगुच्यते।

ऋग्भिः पूर्वाह्णे दिवि देव ईयते। यजुर्वेदे तिष्ठति मद्ध्ये अह्नः। सामवेदेनास्तमये महीयते। वेदैरशून्य-स्त्रिभिरेति सूर्यः।

ऋग्भ्यो जाता ँ सर्वशो मूर्तिमाहुः। सर्वागति र्याजुषी हैव शश्वत्। [४९]। सर्वन्तेजः स्सामरूप्य ँ ह शश्वत्। सर्व ँ हेदं

।। काठकम् ।।

ब्रह्मणा हैव सृष्टम्।

ऋग्भ्यो जात वँ्वैश्यवँ्वर्णमाहुः। यजुर्वेदङ्
क्षत्रियस्याहु र्योनिम्। सामवेदो ब्राह्मणानां
प्रसूतिः। पूर्वे पूर्वेभ्यो वच एतदूचुः।
आदर्श- मग्नि- ञ्चिन्वानाः।
पूर्वे विश्वसृजोऽमृताः। शतवँ्वर्ष सहस्राणि।
दीक्षिता स्सत्रमासत। [५०]।

तप आसीद्गृहपतिः। ब्रह्म ब्रह्माभव-
थ्स्वयम्। सत्यꣳ ह होतैषामासीत्।
यद्विश्वसृज आसत।

।। काठकम् ।।

अमृतमेभ्य उदगायत्। सहस्त्रं परिवथ्सरान्। भूत ँ ह प्रस्तोतैषामासीत्। भविष्यत्प्रतिचाहरत्।

प्राणो अद्ध्वर्युरभवत्। इद ँ सर्व ँ सिषासताम्। [५१]। अपानो विद्वानावृतः। प्रतिप्रातिष्ठदद्ध्वरे।

आर्तवा उपगातारः। सदस्या ऋतवोऽभवन्न्। अर्द्धमासाश्च मासाश्च। चमसाद्ध्वर्यवोऽभवन्न्।

अश ँ सद्-ब्रह्मणस्तेजः। अच्छावाको-

।। काठकम् ।।

ऽभवद्यशः। ऋतमेषां प्रशास्तासीत्। यद्विश्वसृज आसत। [५२]।

ऊर्ग्राजानमुदवहत्। ध्रुवगोप स्सहोऽभवत्। ओजोऽभ्यष्टौद्ग्रावण्णः। यद्विश्वसृज आसत।

अपचितिः पोत्रीयामयजत्। नेष्ट्रीयामयजत्त्विषिः। आग्नीद्ध्राद्विदुषी सत्यम्। श्रद्धा हैवायजथ्स्वयम्।

इरापत्नी विश्वसृजाम्। आकूतिरपिनड्ढविः। [५३]। इद्ध्मꣳ ह क्षुच्चैभ्य उग्रे। तृष्णा चावहतामुभे।

।। काठकम् ।।

वागेषाꣳ सुब्रह्मण्यासीत्। छन्दो-
योगान् विजानती। कल्पतन्त्राणि तन्वानाहः।
सꣳस्थाश्च सर्वशः।

अहोरात्रे पशुपाल्यौ। मुहूर्ताः प्रेष्या
अभवन्न्। मृत्युस्तदभवद्धाता। शमितोग्रो
विशां पतिः। [५४]।

विश्वसृजः प्रथमा स्सत्रमासत। सहस्रसमं
प्रसुतेनयन्तः। ततो ह जज्ञे भुवनस्य गोपाः।
हिरण्मय श्शकुनि ब्रह्म नाम।

येन सूर्य स्तपति तेजसेद्धः। पिता पुत्रेण

।। काठकम् ।।

पितृमान् योनियोनौ। नावेदविन्मनुतेतं बृहन्तम्। सर्वानुभुमात्मानꣳसंपराये।

एष नित्यो महिमा ब्राह्मणस्य। न कर्मणा वर्द्धते नो कनीयान्। [५५]। तस्यैवात्मा पदवित्त ꣳविदित्वा। न कर्मणा लिप्यते पापकेन।

पञ्चपञ्चाशत स्त्रिवृत स्सꣳवथ्सराः। पञ्चपञ्चाशतः पञ्चदशाः। पञ्चपञ्चाशत स्सप्तदशाः। पञ्चपञ्चाशत एकविꣳशाः।

विश्वसृजाꣳसहस्रसꣳवथ्सरम्। एतेन वै

## ।। काठकम् ।।

विश्वसृज इद व्विँश्वमसृजन्त। यद्विश्व-
मसृजन्त। तस्माद्विश्वसृजः।

विश्वमेनाननु प्रजायते। ब्रह्मण स्सायुज्य ँ
सलोकताँय्यन्ति। एतासामेव देवताना ँ
सायुज्यम्। सार्ष्टिता ँसमान लोकताँय्यन्ति।

य एतदुपयन्ति। येचैनत्प्राहुः। येभ्यश्चैनत्
प्राहुः। ओम्।। [५६]।।

(शश्वदासत सिषासतामासत हविष्पतिः
कनीयान्तस्माद्विश्वसृजोऽष्टौ च)।।

* * * * * * *

।। काठकम् ।।

[तुभ्यन्देवेभ्य स्तपसा देवेभ्यो ब्रह्म वै चतुर्होतारो यच्चामृतꣳ सर्वा दिशो दिक्षु सर्वान्दिवमृचां प्राची नव] ।। [१] ।।

[तुभ्यन्तपसा ता वा एताः पञ्च हिरण्यन्ददाति सर्वादिशस्तप आसीथ्षट्पञ्चाशत्] ।। [५६] ।।

[तुभ्यमोम्] ।।

।। हरिः ओ(३)म् ।।

इति तैत्तिरीय यजुर्ब्राह्मणे
का ठ के
तृतीयः प्रश्नः समाप्तः ।।

* * * * * * *